श्रीः

श्रीमार्तण्डसोमयाजिविरचिता.

# काण्वीया अंत्येष्टि-पद्धतिः



बड्लीकरश्रीयज्ञेश्वराध्वरिसूरिसूनुना
चिदम्बरशर्मणा
संशोधिता

घाणेकरोपाह्व श्रीयुत भालचंन्द्ररावेन
स्वीये धारवाडस्थप्रतिभामुद्रणालये
मुद्रिता.

'काळे' इत्युपाह्वभिकाजिपंतेन
आनन्दवने स्वभवने
प्रकाशिता.

शा. शकः १८६३ क्रि. शकः १९४१

मूल्यं सपादरूप्यकः

श्रीः

श्रीमार्तण्डसोमयाजिविरचिता.

# काण्वीया अंत्येष्टि-पद्धतिः



बड्लीकरश्रीयज्ञेश्वराध्वरिसूरिसूनुना
चिदम्बरशर्मणा
संशोधिता

घाणेकरोपाह्व श्रीयुत भालचंन्द्ररावेन
स्वीये धारवाडस्थप्रतिभामुद्रणालेय
मुद्रिता.

'काळे' इत्युपाह्वभिकाजिपंतेन
आनन्दवने स्वभवने
प्रकाशिता.

शा. शकः १८६३ क्रि. शकः १९४१

मूल्यं सपादरूप्यकः

## — काचिद्विज्ञप्तिः —

इयमिदानीं संमुद्य प्रकाश्यते काण्वीयान्त्येष्टिपद्धतिः। आसी-न्महतः कालात् 'काण्वीयकर्मकाण्डमार्तण्ड' नामा निबंधः संमुद्य प्रकाशनीय इति महीयस्यस्माकं मनीषा। सा पुनरुदारहृदयानां सुगृहीतनामधेयानां सुकृतिनां काण्वमहीसुमनसां बहुशः प्रार्थितानामपि महतौदार्येण तत्रैव विलीना, यतः खलु जनिमापन्नाऽभूत्। खण्डशः सम्मुद्य प्रकाशनीय इति निश्चित्य कतिपयेभ्यो वर्षेभ्यः प्राक् नित्यविधिः प्रकाशितः। स प्रकाशक मंजूषायामात्मानं रक्षति। अथापि श्रीयुत वी. पि. काळे महोदयः परोपकृतिमात्रदत्तमना इमां अंत्येष्टिपद्धतिं प्रकाशयितुं सन्नद्धः। प्रयासोऽस्य काळेमहाशयस्य फलं गृण्हातु भगवतः सच्चिदानन्दस्य परमेशितुः कृपया। इतः परमपिवा काण्वीय ग्रंथप्रकाशनधृतदीक्षं काळेमहाशयं काण्वशाखीयाः सुकृतिनः एकैकग्रंथसंग्रहेणापि प्रोत्साहयन्तु इति प्रार्थयते

चिदम्बरशर्मा

विशेषतो द्रष्टव्यम्—

सीसकाक्षरयोजकानां नाविन्यानवधानादिना कृतेऽप्यनेकशः संशोधने बहूनि किलात्र स्खलितानि सवृत्तानि। तत्र कानिचन स्थूलानि दृङ्मार्गप्रविष्टानि शुद्धिपत्रे संशोधितानि। मानुषमात्रसुलभेन दृगनवधानेनोर्वरिता विसर्गबिंदुमात्रादिच्युतयः पाठकैः क्षमीकरणीया इति ॥

## अनुक्रमणिका



॥ श्रीः ॥

श्रीमार्तण्डसोमपयाजिविरचिता काण्वीया अन्त्येष्टिपद्धतिः ॥

॥ श्रीगणेशायनमः ॥ श्रीयाज्ञवल्क्यगुरुभ्योनमः ॥

## १ मंगलमुपोद्घातश्च

श्रीसर्वमंगलाजानिं संसारार्णवतारणं ॥
अपवर्गप्रदातारंमृत्युञ्जयमुपास्महे ॥ १ ॥
गणेश नौमि वाग्देवीं मल्लारिं कुलदैवतम् ॥
योगीश्वरं च पितरौ स्वप्रकाशगुरूनपि ॥ २ ॥
कातीसूत्रभाष्यादिग्रंथान्वीक्ष्य तनोम्यहम् ॥
मार्तंडसोमयाजीमां काण्वीयान्त्येष्टिपद्धतिं ॥ ३ ॥
प्रयोगरूपेणैवायं यथामति विरच्यते ॥
निबन्धो नात्र निर्मूलं लिखितं हि मनागपि ॥ ४ ॥

तत्रादौ पुत्रादिभिः पित्रादिकं आसन्नमरणं ज्ञात्वा पापानुसारेण षडब्दं त्र्यब्दं सार्धाब्दं वा प्राजापत्यं प्रायश्चित्तं तेन कारयेत् । तस्याशक्तौ स्वयं कुर्यात् । संकल्पमात्रं कृत्वा सूतकांते वा कुर्यात् । प्रायश्चित्तप्रयोगः सस्कारमार्तंडे निरूपितः ।

## २ वैतरणीदानं

प्रायश्चित्तं कृत्वा वैतरणीं दद्यात् । आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम समस्तपापक्षयद्वारा यमद्वारस्थितवैतरण्याख्यनद्युत्तारणार्थं वैतरणीधेनुदानं करिष्ये ॥ तदंगत्वेन ब्राह्मणपूजनं गोपूजनं च करिष्ये । इति संकल्प्य गोप्रतिग्रहार्थं गोत्रोच्चारपूर्वकंब्राह्मणं वृत्वा यथाविभवं पूजयित्वा प्रार्थयेत् । विष्णुरूप द्विजश्रेष्ठ भूदेवपंक्तिपावन ॥ तर्तुकामः प्रदास्यामि तुभ्यं वैतरणीं तु गां ॥ देहीति प्रतिवचनं ॥ पुत्रादिः कर्ता चेत्तर्तुमस्ये त्यूहः । ततो गां संपूज्य प्रार्थयेत् । धेनुके त्वं प्रतीक्षस्व-यमद्वारे महापथि ॥ उत्तितीर्षुरहं देवि वैतरण्यै नमोऽस्तुते॥ पुत्रादौ कर्तारि उत्तितीर्षुरयमित्यूहः ॥ ततस्तिलकुशजलान्यादाय तस्याः पुच्छं करे धृत्वा-यमद्वारपथे घोरे कृष्णावैतरणी नदी ॥ तर्तुकामः प्रदास्यामि तुभ्यं वैतरणीं तु गां ॥ इमां वैतरणीसंज्ञिकां गां सवत्सां विष्णुदैवतां स्वर्णश्रृंगीं ताम्रपृष्ठां कांस्यदोहनां कृष्णवासोयुगच्छन्नां सप्तधान्यसहितां पट्टवस्त्रबद्धेक्षुमयोडुपोपारि छत्रोपानहकांस्यघंटोपवीतसंयुक्तां कार्पासद्रोणस्य ताम्राभाजनोपारिस्थितलोहदण्डहस्तमहिषारूढयमसहितां गंधाद्यर्चितां अमुकसगोत्रायामुकशर्मणे

ब्राह्मणाय संप्रददे। तेन श्रीपापहामहाविष्णुः प्रीयतां नममेति उक्त्वा प्रतिगृहितृविप्रहस्ते जलं क्षिपेत् ॥ दान-साङ्गतासिद्ध्यर्थं यथाशक्ति सुवर्णं वस्त्रयुगं वा दक्षिणां संप्रददे ॥ प्रार्थना–विष्णुरूप द्विजश्रेष्ठ भूदेवपंक्तिपावन। सदक्षिणामयादत्ता तुभ्यं वैतरणी तु गौः ॥ धेनुके त्वं प्रतीक्षस्व यावदागमनं मम। (पुत्रेकर्तारि "आगमनं भवेत्" इत्यूहः) वैतरणीं नदीं घोरां पुच्छलग्नस्तथःराम्यहं ॥ (पुत्रादिः "लग्नस्तरोत्वयं" इत्यूहः) धेनुप्रार्थना-या लक्ष्मी सर्वभूतानां या च देहे व्यवस्थिता॥ धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ पुत्रादौतु "पापमस्य व्यापोहतु" इत्यूहः) इतिसम्प्रार्थ्य विसर्जयेत् ॥ महाविष्णुः प्रीयतां ॥ स्वयंदानाशक्तौ पुत्रादिर्दत्वा तस्मै श्रेयो दद्यात्॥ कृष्णा-या अभावेऽन्यवर्णाऽपि देया। गोरभावे तन्मूल्यद्रव्वं देयं




श्रीः ॥ देशादिसंकीर्त्य मम ऋणत्रयापाकरणार्थं ऋणधेनुदानं क० ॥ ब्राह्मणपुजा धेनुपूजा च वैतरणी-दानवत् ॥ वैतरणीपदस्थाने ऋणपदोहस्तु ततो विशेषः॥ दानमंत्रस्तु, अधर्मादर्जिते पापं सप्तजन्मार्जितं ऋणं ॥

तत्सर्वं नाशमायातु गामेकां ददतो मम॥ देवमानवपितृणा-मृणं यदिहजन्मनि ॥ तत्सर्वं नाशमायातु ऋणधेनुप्रदानतः इति ॥ अथपापधेनुदानं देशादिसंकीर्त्य ममजन्मप्रभृति अद्ययावदार्जितपापापनोदनार्थं पापधेनुदानं० ब्राह्मणपूजा धेनुपूजा च प्राग्वत् । दानमंत्रस्तु आजन्मोपार्जितं पापं मनोवाक्कायकर्मजं ॥ तत्सर्वं नाशमायातु पापधेनु-प्रदानतः इति ॥ मोक्षधेनुदानं क० ॥ ब्राह्मणपूजा धेनुपूजाच प्राग्वत्॥ दानमंत्रस्तु मोक्षं देहि हृषीकेश मोक्षं देहि जगत्पते ॥ मोक्षधेनुप्रदानेन मुकुंदः प्रीयतां मम इति ॥ महिषीदानं करिष्ये ॥ ब्रह्मणपूजामाहिषीपूजा च कार्या ॥ दानेमंत्रः ॥ इंद्रादिलोकपालानां या राज्ञी महिषी शुभा ॥ माहिषदानमहात्म्यात्सास्तु मे वरदा शुभा इति ॥ अश्वदानं ॥ देशादिसंकीर्त्य ममजन्म० अश्वदानमहंकारिष्ये विप्रपूजाश्वपूजा च कार्या ॥ दाने मंत्रः, गंधर्वकुलजातोऽयं यथा देवेन्द्रवाहनः ॥ तस्मादश्वप्रदानेन हयग्रीवः प्रसीदतु ॥ इति ॥

## ४ दशदानानि

तानि- गोभूतिलाहिरण्याज्यवासोधान्यगुडानि च ॥ रौप्यं लवणमित्याहुर्दशादानान्यनुक्रमात् ॥ इत्युक्तानि ॥

देशकालौ स्मृत्वा मम जन्मप्रभृतिमरणांतं यावदनेकपाप क्षयार्थं दशदानानि करिष्ये इतिसंकल्पः ॥ प्रतिदानं आदौ ब्राह्मणपूजनं ततो द्रव्यपूजनं कृत्वा वक्ष्यमाणमंत्रैर्दानम् ॥ गवामङ्गेष्विति गोपूजनं । ततः- यज्ञसाधनभूताया विश्वस्याघप्रणाशिनी । विश्वरूपधरो देवः प्रीयतामनया गवा ॥ दशदानांतर्गतामिमां गां रुद्रदेवतां (गोनिष्क्रयद्रव्यंवा) तुभ्यमहं संप्रददे ॥ इति गां दत्वा तत्सांगतासिध्यर्थं दक्षिणामिमां संप्र० ॥ १ ॥ अथभूदाने मंत्रः— सर्वभूताश्रया भूमिर्वराहेण समुद्धृता ॥ अनंतसस्यफलदा अतः शांतिं प्रयच्छमे ॥ दशादानांतर्गतामिमां भूमिं विष्णुदेवतां (तन्मूल्यद्रव्यंवा) संप्र० ॥ दक्षिणां० ॥ ॥ २ ॥ तिलदाने- महर्षेर्गोत्रसंभूताः कस्यपस्य तिलाः स्मृताः ॥ तस्मादेषां प्रदानेन मम पापं व्यपोहतु ॥ दशदानांतर्गतं तिलदानं सोमदैवतं० दक्षिणां० ॥ ३ ॥ हिरण्यदाने, हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनंतपुण्यफलदमतः० ॥ दशदानांतर्गतंहिरण्यदानं अग्निदैवतं० दाक्षिणां० ॥ ५ ॥ आज्यदाने—कामधेनोः समुद्भूतं सर्वक्रतुषु संस्थितं ॥ देवानामाज्यमहारमतः० दशदानांतर्गतमाज्यदानं विष्णुदैवतं० दक्षिणां० ॥ ५ ॥ वस्त्रदाने, शरणं सर्वलेकानां लज्जाया रक्षणंपरं ॥ सुवेषधारिवस्त्रत्वमतः० दशदानां

तर्गतं वस्त्रदानं बृहस्पतिदैवतं० दक्षिणां० ॥ ६ ॥ धान्य दाने,—सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् ॥ प्राणिनां जीवनोपायमतः० ॥ दशदानांतर्गतं धान्यदानं प्रजापतिदैवतं० दक्षिणां ॥ ७ ॥ गुडदाने, यथा देवेषु विश्वात्मा प्रवरश्चज नार्दनः ॥ सामवेदस्तु वेदानां महादेवश्चयोगिनां ॥ प्रणवः सर्वमंत्राणां नारीणां पार्वती यथा ॥ तथा रसानां सर्वेषां गुडःश्रेष्ठतमो मतः ॥ मम तस्मात्परां लक्ष्मीं ददस्व गुड सर्वदा ॥ गुडस्य संप्रदानेन मम पापं व्यपोहतु ॥ दशदानांतर्गतं गुडदानं विष्णुदैवतं० दक्षिणां० ॥ ८ ॥ रौप्यदाने,—प्रीतिकरः पितॄणां च विष्णुशंकरयोः सदा ॥ शिवनेत्रोद्भवं रौप्यमतः० ॥ दशदानांतर्गतं रौप्यदानं रुद्र दैवतं० दक्षिणां० ॥ ९ ॥ लवणदाने, यस्मादन्नरसाः सर्वे नोत्कृष्टालवणं विना ॥ शंभोः प्रीतिकरा नित्यमतः० दशदानांतर्गतं लवणदानं यमदैवतं यमदूतानां प्रीत्यै अमु कगोत्राय० दक्षिणां ॥ १० ॥ ॥ इति ॥

## अथदानांतराणि

निष्क्रयणदान ॥ यथाशक्ति तिलान् सुवर्णंच ताम्र-पात्रे कृत्वा संकल्पपूर्वकं ब्राह्मणाय दद्यात् ॥ देशकालौ संकीर्त्य मम जन्मप्रभृतिमरणांतंयावदनेकपापक्षयद्वारा

श्रीमहाविष्णुप्रीत्यर्थं ब्राह्मणाय तिलपात्रदानमहं करिष्ये ॥ ब्राह्मणं तिलपात्रं च संपूज्य दानेमंत्रः— तिलाः पुण्याः पवित्राश्चतिलाः सर्वकराःस्मृताः ॥ शुक्लावायदि वा कृष्णा ऋषिगोत्रसमुद्भवाः ॥ यानिकानि च पापानि ब्रह्महत्यासमानि च ॥ तिलपात्रप्रदानेन तानि नश्यंतु सर्वदा ॥ पुत्रादिस्तु "अस्यपापं व्यपोहतु" इति वदेत् ॥ इदं तिलपात्रं विष्णुदैवत अमुकशर्मणे ब्राह्मणाय० दानसांगतार्थं इमां दक्षिणां तुभ्यमहं संप्रददे ॥ आज्यपात्रदानं--देशकालौ संकीर्त्य ममजन्म० आज्यपात्रदानमहं करिष्ये ॥ ब्राह्मणं संपूज्य ताम्रपात्रे कांस्य-पात्रे वाऽज्यं गृहित्वा ब्राह्मणाय–यो देवः सर्वलोकानां हव्यकव्यभुगव्ययः ॥ आज्यपात्रप्रदानेन स मे विष्णुः प्रसीदतु ॥ इति दद्यात् । इदमाज्यपात्रं विष्णुदैवतं अमुक० दक्षिणां० ॥ लोहदानं--देशादिकीर्तनांते. यमायुधानां प्रीत्यै लोहदानं क० ब्राह्मणं संपूज्य तस्मै, यस्मादायसकर्माणि तवाधीनानि सर्वशः ॥ लांगलाद्यायुधादीनि ततः शांतिं० इति दद्यात् । इदं लोहं यमदैवतं अमुक० दक्षिणां० ॥ कार्पासदानं, ब्राह्मणं संपूज्य-- येन दत्तेन प्रीयंते भूर्भुवःस्वरिति क्रमात् ॥ ब्रह्माद्या ऋषयः सर्वे शंकराद्या गणास्तथा ॥ इंद्राद्या

देवताः सर्वाः कार्पासेन तु मोहिताः ॥ इति कार्पासं दद्यात् ॥ इमं कार्पासं सर्वदैवतं अमुक० ॥ दक्षिणां० ॥ लवणदानं, देशादिकीर्तनांते यमदूतानां प्रीत्यै लवणदा० ब्राह्मणं संपूज्य--यस्मादन्नरसाः सर्वे० इतिलवणं द० ॥ इदं लवणं यमदैवतं अमुक० दक्षिणां० ॥ अथसप्तधान्यदानानि ॥ देशादिकीर्तनांते मम जन्म० सप्तधान्यदानानि करिष्ये । प्रतिधान्यदानं विप्रपूजा द्रव्यपूजा च । दानमंत्रेविशेषः ॥ व्रीहिदानं, ब्रह्मणा निर्मिताः पूर्वं व्रीहयो यज्ञसाधनाः ॥ अनेन व्रीहिदानेन मम संतु मनोरथाः ॥ इदं व्रीहिदानं प्रजापतिदैवतं० ॥ १ ॥ यवदानं,--यवाः शुद्धाः सदा पूज्या देज्ञ हविषि संस्थिताः ॥दानेनानेन वै यस्माच्छंतिरस्तु सदा मम ॥ इदं यवदानं प्रजापतिदै० ॥ २ ॥ गोधूमदानं । धान्यचूडामणिर्जंबूद्वीपे गोधूमसंज्ञकाः ॥ पुष्टिवृद्धिकराः सौख्या अतः शांतिं० इदं गोधूमधानं प्रजाप० ॥ ३ ॥ मुद्गदानं,-धान्यानांमुत्तमा मुद्गाः देवानां प्रीतिदायकाः ॥ अतस्तेषां प्रदानेन विष्णुलोके महियते ॥ इदंमुद्गदानं प्रजाप० ॥ ४ ॥ माषदानं,-येच देहहितार्थाय विष्णोर्देहसमुद्भवाः । पितृतृप्तिकरा माषाः प्रयच्छंतु शुभां गतिं ॥ इदं माषदानंपितृदैवतं० ॥ ५ ॥ प्रियंगुदानं, प्रियंगवः सदाश्रेष्ठा

ऋषीणां प्रीतिदायकाः । अतस्तेषां प्रदानेन मुनिलोके महीयते ॥ इदं प्रियंगुदानं ऋषिदैवतं० ॥ ६ ॥ तिलदानं, तिलाः श्वेतास्तिलाः कृष्णास्तिला गोमूत्रसंभवाः ॥ ते मे दहंतु पापानि शरीरादिकृतानि च ॥ इदं तिलदानं सोमदैवतं० ॥ ७ ॥ इति दानानि कृत्वा—यन्मया कृतं प्रायश्चित्तं तदच्छिद्रमस्तु ॥ व्रतच्छिद्रं तपच्छिद्रं यच्छिद्रं यज्ञकर्मणि ॥ सर्वं भवतु तेऽच्छिद्रं यस्य चेच्छंति वै द्विजाः ॥ इतिविप्रप्रतिवचनं ॥ एतत्प्रायश्चित्तमकृत्वैव यदिपित्रादिर्मृतस्तदा पातकसत्तानिश्चये पुत्रादिनापीदमवश्यं कार्यम् । अनिश्चये नावश्यकं । पुत्रादिना करणे पंचगव्यप्राशनाभावः ॥ ततो दीनानाथानपि द्रव्यदानादिना प्रतोष्य. पुत्रमित्रकलत्रसोदर—क्षेत्रधनधान्यादिषु ममत्वविनिवर्तनं कार्यं ॥

॥ आतुरावस्थायां कर्तव्य ॥

भूमौ दक्षिणाशिराः शयीत ॥ अस्मिन्नवसरे उत्क्रांतिधेनुदानं ॥ पुत्रादिर्देशादि संकीर्त्य अमुकगोत्रस्यामुकशर्मणः अस्य सुखेन प्राणोत्क्रमणप्रतिबंधकोक्तनिष्कृत्यनुक्तनिष्कृतिसकलपातकनिवृत्तिद्वारा सु--

खेन प्राणोत्क्रमणार्थं उत्क्रांतिधेनुदानंकरिष्ये— दारिद्रं कुटुंबिनं श्रोत्रियं ब्राह्मणं वृत्वा संपूज्य गवा मंगेषु० इति मंत्रांते इमामुत्क्रांतिधेनुंरुद्रदैवत्यां संकल्पोक्तफलावाप्तये अमुकसगोत्रायामुकशर्मणे ब्राह्मणाय० दानसाङ्गतायै यथाशक्ति दक्षिणां सम्प्र० इति दद्यात्॥

## ॥ मृतिकालीनकर्तव्यता ॥

ततो दुर्बलावस्थं संभावितसन्निकृष्टमरणं यजमानं विदित्वा मृदा गोमयेन गोमूत्रेण तीर्थोदकेन शुध्दोदेकन च संस्नाप्य शुध्दे वाससी परिधाप्य गोमयोपालिप्तायां भुवि दक्षिणाग्रान् कुशानास्तीर्य बहुतिलान् विकीर्य तत्र प्राक्शिरसं उदाक्शिरसं दक्षिणाशिरसं वा भूमौ पुत्रोत्सङ्गे विनिवेशयेत् ॥ मुखे सुवर्णं कास्यं मणिं विद्रुमं वा प्रक्षिपेत् ॥ शालिग्रामशिला तुलसी च सान्निधौ निधेया ॥ गोपीचन्दनेन भस्मना गंगामृत्तिकियाचमृतस्य सर्वांगानुलेपनं सर्वत्र तिलकाँश्च कुर्यात् ॥ मुखे शिरसि-कर्णयोश्च निर्माल्यरूपां तुलसीं क्षिपेत् । कंठे गङ्गोदकं धारयेत् ॥ रुद्राक्षतुलसीनलिनादिमालाश्च

धारयेत् ॥ दीपप्रज्वालनं ॥ विष्णुपूजनं ॥ ॐ नमो भगवते वासुदेवाय—ॐ नमः शिवाय—श्री राम—इत्यादि जपः कार्यः। अमृतत्त्वप्राप्ति-कामनया उपनिषद्भागान् अन्यांश्च पुण्यमंत्रान् गीताः स्तोत्राणि सहस्रनामादीनि च पठेत् पुत्रशिष्यादयो वा श्रावयेयुः। तत्र संकल्पः अमृतत्वप्राप्त्यर्थं पुण्यसूक्तस्तोत्रादिपठनं (श्रवणं वा) करिष्ये। श्रोतुः संकल्पाशक्तौ श्रावयितैर्वा स्यामुकशर्मणोऽमृततत्वप्राप्त्यै अमुक श्रावयिष्ये इति। निर्णयकमलाकरे मुमूर्षोः ॐ गृहाण चेमं मधुपर्कमाद्यं संसारनाशनकरं त्वमृतेन तुल्यं। नारायणेन रचितं भगवत्प्रियाणां दाहेच शांतिकरणं सुर लोकपूज्यं। इति मंत्रेण मधुपर्कदानमुक्त देवयाज्ञिकेन।

## ८ ॥ मृते कृत्यम् ॥

प्राणोत्क्रमणानंतरं कर्ता अन्येच पुत्राः आच-म्य (अमंत्रकं) प्राणायामं कृत्वा पवित्रं धृत्वा देशादिसंकीर्त्य (अपसव्यं) अमुक गोत्रस्य अमुक प्रेतस्य (स्त्रीविषये--गोत्रायाः प्रेतायाः) प्रेतत्वनिवृत्त्या

उत्तमलोकप्राप्त्यर्थं औध्र्वदेहिककर्तृत्वाधिकारासिध्य परर्थं वपनं करिष्ये. कर्तृभिन्नानां पुत्राणां पितृमरण निमित्तं वपनं करिष्ये ) इति संकल्प्य यानि-कानिचि पापानि ब्रह्महत्यासमानि च ॥ केशानाश्रित्य-तिष्ठंति तस्मात्केशान्वपाम्यहं ॥ इति दक्षिणाभिमुखः उपविश्य कक्षोपस्थवर्जं नखलोमानि दक्षिणसंस्थानि वापयेयुः ( रात्रौ मरणसंभवे परेहनि वपनं ) ततः कर्ता वपनानंतरं स्नात्वा अहते वाससी परिधाय ( अकृतप्रायश्चित्तस्य प्रायश्चित्तसंकल्पं, दुर्मरणसंभवे त-त्प्रायश्चित्तसंकल्पं च ) कृत्वा स्वयमपि पापानुसारेण प्रायश्चित्तं कृत्वा मृतस्यौर्ध्वदेहिकं कुर्यात् । यदिलोभादिना प्रेतस्य आत्मनश्च प्रायश्चित्तादिना शुद्धिमकृत्वा दाहादिकं करोति तदा तन्नोपतिष्ठते । अन्तरिक्षे ) विनश्यति । उभयोर्नरकप्राप्तिश्च ।

## ९ ऊर्ध्वोच्छिष्टादिमरणे प्रायश्चित्तम् ।

ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टेषु कृच्छ्रत्रयं । अस्पृश्यस्पर्शने षट् कृच्छ्राः । अंतरालमृतौ नव । खट्वामरणे द्वादश । निगडमृतौ पंचदश । रजकादि सप्तविधान्त्यजादिस्पृष्टमरणे त्वेकविंशतिकृच्छ्राणि देशांतर-

मरणे पराकद्वयं अष्टौ कृच्छ्रावा । आशौचे मरणेच कृच्छ्रत्रयं । एवं पुत्रादयः पित्रादेः पापिनः पापानुसारेण प्रायश्चित्तं दुर्मरणात्मघातादिनिमित्ते चाग्रे वक्ष्यमाण प्रायश्चित्तं नारायणबल्यादिकं च कृत्वा शुध्दिं सम्पाद्यैवात्यं कर्म कुर्युः । अथ संकल्पवाक्यम्-- कर्ता देशकालौ संकीर्त्य अमुक गोत्रस्य अ० प्रेतस्य ( स्त्रियाः, अमुक गोत्रायाः प्रेतायाः ) ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टास्नातास्पृश्यस्पृष्टमरणखट्वमरणांतरिक्षमरणादि-- जनितप्रत्यवायपरिहारार्थं विष्णुपूजनपूर्वकं द्वादश षट् त्रिन् कृच्छान्वा यथाशक्ति प्रायश्चित्तं अमुक प्रत्याम्नायेन सद्यः ( सूतकांतेवा ) करिष्ये इति संकल्प्या शक्तौ तदात्व एवद्रव्यदानादिद्वारा ( अशक्तौ सूतकांते वा ) कुर्यात् । कर्तापिआचमनादिदेशकालकीर्तनाते आत्मनः शुध्दि द्वारा पितुः और्ध्वदेहिककर्माधिकारसिद्ध्यर्थं शक्तया एतावदेव, कृच्छत्रयं वा प्रायश्चित्तं करिष्ये इति संकल्प्य शक्तौ तदानीमेव अशक्तौ सुतकांतेवा स्वपापापनोदार्थं प्रायश्चित्तं कुर्यात् ।

॥ १० ॥ गृहाच्छवनिर्हरणं ॥

ततः प्रेतं संस्नाप्य वस्त्रमुत्सार्य पुनः सस्नाप्य भस्म गोपाचिंदनतुलसीमूलमृत्तिकादिभिरनुलिप्य कण्ठे रुद्राक्ष

नलदादिमालाः प्रतिमुच्य अहतेन वाससा प्रत्यगग्रेण त्रिभि भागैः शिरःप्रभृतिपादांगुलिपर्यंतं पादतलवर्ज्यं प्रेतमाच्छाद्य पाददेशस्थं चतुर्थभागं छित्वा तेनात्मनः उत्तरीयं कुर्यात् । ( द्वादशाहांतप्रेतकृत्येषु तदेव धार्यं । स्मशानवासिभ्यो दातुमवस्थापयेदिति केचित् ) तत आचम्य प्राणानायम्य पवित्रं धृत्वा बद्धशिखः प्रेतस्य दक्षिणभागे दक्षिणाभिमुख उपाविश्य ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तया उत्तमलोकप्राप्त्यर्थं मरणस्थाने शवनाम्ना पिंडदानं करिष्ये. इति संकल्प्य दाक्षिणाग्रकुशनास्तीर्य अमुकगोत्र अमुकप्रेत इदमवनेजनं तवोपातिष्ठतां । यव-पिंडंगृहीत्वा अमुकगोत्र अमुकप्रेत मृतिस्थाने एषापिंडो मया दत्तः शवनाम्नस्तवोपातिष्ठतां । अमुकगोत्र अमुक प्रेत इदं प्रत्यवनेजनं तवोपातिष्ठतां । अमुकगोत्र अमुकप्रेत इमे गंधादिसर्वोपचारास्तवोपातिष्ठतां । अनादिनिधनोदेवः शंखचक्रगदाधरः ॥ अक्षय्यः पुंडरीकाक्षः प्रेत मोक्षप्रदोस्तुते ॥ इति प्रार्थ्य पिंडं विसृज्य अनेन मरणस्थाने शमनाम्नापिंडदानेन प्रेतस्य प्रेतत्वनिवृत्तिरस्तु । अग्रेतनकर्माधिकारसंपदस्तु । ततः सर्वे सापिंडादयः मुक्तकेशाः प्रच्छादितमुखं प्राक्शिरसं ऊर्ध्वमुखं प्रेतं द्वार-द्वेशमानीय स्थापयेयुः । ततः कर्ता तत्र प्रेतस्य

दक्षिणभागे--आचमनादिदेशकालकीर्तनांते ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्वविमुक्त्या उत्तमलोक-प्राप्त्यर्थं द्वारदेशे पांथनाम्ना पिंडदानं करिष्ये इति संकल्प्य दाक्षिणाग्रकुशानास्तीर्य- अमुकगोत्र अमुकप्रेत इदमवनेजनं तवोपातिष्ठतां । अमुकगोत्र अमुकप्रेत द्वारदेश एष पिंडो मया दत्तः पांथनम्नस्तवोपतिष्ठतां । अमुकगोत्र अमुकप्रेत इदंप्रत्यवनेजनं तवोपतिष्ठतां । अमुकगोत्र अमुकप्रेत इदं तिलोदकं तवोपतिष्ठतां । अमुकगोत्र अमुकप्रेत इमेगंधादि सर्वोपचारास्तवोपतिष्ठतां । अनादि निधनो० ॥ इति प्रार्थ्य पिंडं विसृज्य अनेन द्वारदेशे पांथनाम्ना पिंडदानेन प्रेतस्य प्रेतत्वनिवृत्तिरस्तु उत्तमलोकावाप्तिरस्तु । अग्रेतनकर्मा धिकारसंपदस्तु । ततः प्रेतमासंद्यां प्राक्शिरसं ऊर्ध्वमुखं शाययित्वा सजातीया दाहदेशं नयेयुः । कपालाग्नें लौकिकाग्नियां मृन्मवष्यात्यादायान्यनेनाग्रे गंतव्यं । यवीप ष्टादि सर्वसामग्रीच नेतव्या । सपिंडादायश्चसर्वें अधःकृता । पवीता अप्रावरणाः मुक्तकेशाः वृध्दपुरःसराः प्रेतमनुगच्छेयुः । ब्राम्हणप्रेतो नगरपश्चिमद्वारेणनेयः । गमनसमये- अहरह र्नीयमानो गामग्निं पुरुषंत्यजं ॥ वैवस्वतो नतोतृप्यति सुराप इव दुर्मतिः ॥ इति यमगाथां गायेयुः

अपेतो यन्तु पणयोऽसुम्ना देवपीयवः ॥ अस्य लोक-स्सुतावतः ॥ १ ॥ द्युभि रहोभिरक्तुभिर्व्यक्तय्यमो ददात्यवसानमस्मै ॥ साविता ते शरीरेभ्यः पृथिव्याँ लोकमिच्छतु ॥ तस्मै युज्यन्तामुस्त्रियाः ॥ २ ॥ वायुः-पुनातु सविता पुनात्वग्नेर्भ्राजसा सूर्यस्य वर्चसा ॥ विमुच्यन्तामुस्त्रियाः ॥ ३ ॥ अश्वत्थेवो निषदनम्पर्णेवो वसतिष्कृता ॥ गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ४ ॥ सविता ते शरीराणि मातुरुपस्थ आवपतु ॥ तस्मै पृथिवि शम्भव ॥ प्रजापतौ त्वा देवताया मुपोदके लोके निदधाम्यसौ ॥ ५ ॥ परम्मृत्यो अनुपरेहि पन्थाँय्यस्तेअन्य इतरो देवयानात् ॥ चक्षुष्मते शृण्वते ते ब्रवीमि मानः प्रजाᳩ रीरिषो मोत वीरान् ॥ ६ ॥ शँव्वातश्शᳩ हिते घृणिश्शन्ते भवान्त्विष्टका: ॥ शन्ते भवन्त्वग्नयः पार्थिवासो मात्वाभि शूशुचन् ॥ ७ ॥ कल्पन्तान्ते दिशस्तुभ्यमापःशिवतमास्तुभ्यम्भवतु सिन्धवः ॥ अन्तरिक्षᳩ शिवन्तुभ्यङ्कल्पन्तान्ते दिशस्सर्वाः ॥ ८ ॥ अश्मन्वती रीयते

स॑ꣳरभध्वमुत्तिष्ठत प्रतरतासखाय : ॥ अत्रा जहीमोऽ-
शिवाये असम्ञ्छिवान्वयमुत्तरेमाभिवाजान् ॥ ९ ॥
अपाघमप किल्बिषमपकृत्यामपो रपः ॥ आपो मार्ग त्वम-
स्मदप दुःष्वप्न्यꣳ सुव ॥ १० ॥ सुमित्रियान आप
ओषधयस्सन्तु दुर्मित्रियास्तस्मै सन्तु ॥ योऽस्मान्द्वेष्टि यञ्च
वयन्द्विष्मः ॥ ११॥ अनड्वाहमन्वारभामहे स्वस्तये ॥
सन इन्द्रइव देवेभ्यो वन्हिस्सन्तारणो भव ॥ १२ ॥
उद्वयन्तमसस्परिस्वःपश्यन्तउत्तरम् ॥ देवन्देवत्रा सूर्यम-
गन्म ज्योतिरुत्तमम् ॥ १३ ॥ अग्नआयूꣳषि पवस आसु-
वोर्जमिषञ्चनः ॥ आरे बाधस्वदुच्छुनाम् ॥ १४ ॥ आयु-
ष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयो निरेधि ॥
घृतम्पीत्वा मधुचारु गव्यम्पितेव पुत्रमाभिरक्षतादिमा-
न्त्स्वाहा ॥ १५ ॥ इमंजीवेभ्यः परिधिन्दधामि मैषान्नु
गादपरो अर्थमेतम् ॥ शतञ्जीवन्तुशरदः पुरूचीरन्तर्मृत्यु-
न्दधताम्पर्वतेन॥ १६ ॥ परीमे गामनेषत पर्यग्निमहृषत ॥
देवेष्वक्रत श्रवःकइमाॅ२आदधर्षति ॥ १७ ॥ क्रव्यादमग्नि-
म्प्रहिणोमिदूरय्यमराज्यङ्गच्छतु रिप्रवाहः ॥ इहैवायमितरो

जातवेदा देवेभ्यो हव्यव्वहतु प्रजानन् ॥ १८ ॥ वहवपा-
ञ्जातवेदः पितृभ्यो यत्रै नान्वेत्थ निहितान्पराके ॥ मेदसः-
कुल्या उपतान्त्स्रवन्तु सत्या एषामाशिषस्सन्तु कामा-
स्स्वाहा ॥ १९ ॥ स्योनापृथिविनो भवानृक्षरा निवेशनी ॥
यच्छा नश्शर्म सप्रथाः ॥ अपनश्शोशुचदघम् ॥ २० ॥
अस्मात्वमधि जातोऽसि त्वदयञ्जायताम्पुनः॥ असौ स्वर्गाय
लोकाय स्वाहा ॥ अपनश्शोशुचदघम् ॥ २१ ॥

इति यमसूक्तं च जपेयुः । ततो ग्रामश्मशानयोरर्द्ध-
मार्गे आसदीं निधाय कर्ता. आचमनादिदेशकालकीर्त-
नांते ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्वनिवृत्त्या
उत्तमलोकप्राप्त्यर्थं अर्द्धमार्गे भूतनाम्ना पिंडदानं करिष्ये
इति संकल्प्य. दक्षिणाग्रकुशानास्तीर्य अमुकगोत्र अमुक
प्रेत इदमवनेजनं तवोपतिष्ठतां । अमुकगोत्र अमुकप्रेत
अर्द्धमार्गे एषपिंडो मयादत्तः भूतनाम्नस्तवोपतिष्ठतां ।
अमुकगोत्र अमुकप्रेत इदं प्रत्यवनेजनं तवोपातिष्ठतां । अमुक
गोत्र अमुकप्रेत इदं तिलोदकं तवोपातिष्ठतां । अमुकगोत्र
अमुकप्रेत इमे गंधादिसर्वोपचारा उपातिष्ठंतां । अनादि

निधनोदेवः ० इति प्रार्थ्य पिंडं विसृज्य अनेनार्द्धमार्गे भूत नाम्ना पिंडदानेन प्रेतस्य प्रेतत्वनिवृत्तिरस्तु । उत्तमलोका वाप्तिरस्तु । अग्रेतनकर्माधिकारसम्पदस्तु ॥ ततो वाहका व्युत्क्रमेणप्रेतं वहंतो ग्रामादाग्नेयां नैर्ऋत्यांवा मध्योन्नतं परितो निम्नं अनावरणं बहुलोषाधिदेशं प्राप्य श्मशानं कल्प यित्वा तत्रत्यकंटार्कक्षीरवृक्षादीनुद्धास्य दाक्षिणाशिरसं प्रेतंस्थापयेयुः । ततश्चितास्थानं प्रकल्प्य कर्ता तत्र आचम नादिदेशकालकीर्तनांते ( अपसव्यं ) अमुकगोत्रस्य अमुक प्रेतस्य प्रेतत्वविमुक्त्या उत्तमलोकप्राप्त्यर्थं चितास्थाने वायुनाम्ना पिंडदानं करिष्ये । इति संकल्प्य दाक्षिणाग्र- कुशानस्तीर्य अ०गोत्र अ०प्रेत इदमवनेजनं तवो० । अमुक गोत्र अमुकप्रेत चितस्थाने एषापिंडो मयादत्तः वायुनाम्न स्तवोप० । अ० गोत्र अमुकप्रेत इदं प्रत्यवनेजनं तवोप० । अमुकगोत्र अ०प्रेत इदं तिलोदकं तवोपति० । अ०गोत्र अ०प्रेत इम गंधादिसर्वोपचारास्तवोपतिष्ठंतां अनादिनिधनो देवः ० इति प्रार्थ्य पिंडं विसृज्य अनेन चितास्थाने भूत नाम्ना पिंडदानेन प्रेतस्य प्रेतत्वनिवृत्तिरस्तु । उत्तमलोका वाप्तिरस्तु । अग्रेतनकर्माधिकारसंपदस्तु । ततः प्रेतस्य केशश्मश्रुलोम्नांछेदनं संभवे कारयित्वा जलेसर्वाणि तीर्थानि मनसा ध्यायन् तेन जलेन शवं स्नापयित्वा पुत्रादयोऽपि

स्नात्वा शवं पुष्पमालादीभिरलंकुर्युः । ततः कर्ता आचम्य प्राणानायम्य देशकालौ संकीर्त्य ( अपसव्यं ) अ०गोत्रस्य अ०प्रेतत्वनिवृत्या उत्तमलोकप्रात्प्यर्थं शवहस्ते साधक नाम्ना पिंडदानं करिष्ये इति संकल्प्य शवहस्ते दाक्षिणाग्रकुशानास्तीर्य अ०गोत्र अ०प्रेत इदमवनेजनं तवोप०। अ०गोत्र अ०प्रेत शवहस्ते एषपिंडो मतादत्तः साधक नाम्नस्तवोपातिष्ठतां अ०गोत्र अ०प्रेत इदं प्रत्यवनेजनं तवोप० । अ०गोत्र अ०प्रेत इदं तिलोदकं तवोप० । अ०गोत्र अ०प्रेत इमे गंधादिसर्वोपचारास्तवोपातिष्ठंतां । अनादिनिधनोदेवः ० इति प्रार्थ्य पिंडविमृज्य अनेन शव हस्ते साधकनाम्ना पिंडदानेन प्रेतस्य प्रेतत्वनिवृत्तिरस्तु । उत्तमलोकावाप्तिरस्तु । अप्रेतनकर्माधिकारसपंदस्तु । तताश्चितास्थानं सर्वत्र उदकेन संप्रोक्ष्य तत्र प्रागायतांचितां काष्ठैश्चिनुयात् । ततः चितास्थस्नापिंडंचितायां शवहस्त पिंडं शवहस्ते निधांयं मरणस्थानादि पिंडत्रयं जलेप्रक्षिपेत् । ततः चितायां दक्षिणाशिरसं प्रेतंनिधाय प्रेताच्छादितं वस्त्र द्विधाकृत्वा तस्यैकेन खण्डेन प्रेतशरीरमाच्छाद्य द्वितीय खंडं श्मशानवासिभ्यो भूमौ निक्षिपेत् । ततः प्रेतं घृतेनाभ्यज्य मुखे नासिकद्वये, चक्षुर्द्वये, श्रोत्रद्वये चेत्येवं सप्तछिद्रेषु हिरण्यशकलानि तदभावे आज्यबिंदून् निक्षिप्य प्रेतशरीरे

घृताक्तांस्तिलांश्च प्रक्षिप्य शवस्य शिरःप्रदेशे भूमौ त्रिकोणं स्थंडिलंकृत्वा सकुम्भसंस्कारैः संस्कृत्य तत्र कपालाग्निं लौकिकाग्निं मृन्मयस्थाल्यानीतं स्थापयेत् । कुशैः परिस मुह्य, गोमयोदकाभ्यामुपलिप्य, यज्ञकाष्ठेनोल्लिख्य, रेखातः अंगुष्ठानामिकाभ्यां पांसूनुद्धृत्य, कुशोदकेनाभ्युक्ष्य अन्व-ग्निरुषसामग्रमख्यदन्वहानि प्रथमोजातवेदाः ॥ अनुसूर्यस्य पुरुत्राचं रश्मीननुद्यावा पृथिवी आततंथ ॥ इति मृत्स्थालीत आनीतमग्निमादाय- पृष्टोदिविपृष्टो अग्निः पृथिव्यांपृष्टो विश्वा ओषधीराविवेश ॥ वैश्वानरः सहसाप्रष्टो अग्निःसनो दिवा सरिषस्पातुनक्तं । भोअग्नेत्वं क्रव्यादनाम्ना प्रतिष्ठितो भव इति प्रतिष्ठाप्य- तां सवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्यां ॥ याम.स्य कण्वो अदुहत्प्रपीनां सहस्र धारां पयसा महींगां ॥ तत्सवितुः ॥ विश्वानिदे सवितर्दुरितानि परासुव ॥ यद्भद्रं तन्न आसुव ॥ इति मंत्रैः प्रज्वाल्य क्रव्यादाग्नये नमः इति संपूज्य परिसमुह्य पर्युक्ष्य परिस्तीर्य आज्यपात्रं पुरतो निधाय कुशैक रूपं पवित्रमंतर्धाय आज्यपात्रे आज्यं निक्षिप्य अग्नावधि

श्रित्य पर्णपुटमग्नौ सकृत्प्रतप्य कुशेन संमृज्य स्वाग्रतः कुशोपरि स्थापयेत् । तत आज्यमुद्वास्य पवित्रेणोत्पूय अवेक्ष्य पत्रपुटगृहीतेनाज्येन- अग्नये दहनपतये स्वाहा इदमग्नये दहनपतये नमम । कालाय दहनपतये स्वाहा इदंकालाय दहनपतये नमम । अनिलाय दहनपतये स्वाहा इदमनिलाय दहनपतये नमम । अनलाय दहनपतये स्वाहा इदमनलाय दहनपतये नमम । मृत्यवे दहनपतये स्वाहा इदं मृत्यवे दहनपतये ।नमम इति पंचाहुती हुत्वा-अस्मात्त्वमभिजातोसि त्वदयं जायतांपुनः ॥ असौ ( अमुकः इति प्रेतस्य प्रथमांत नामग्रहणं ) स्वर्गाय लोकाय स्वाहा ॥ इदं अमुक प्रेताय नमम इति शवमुखे एकामाहुतिं हुत्वा ( धनिष्ठापचक त्रिपान्नक्षत्रादिमरणे तद्विधिं कृत्वा बहुलतृणानादाय अग्नौ प्रज्वाल्य अप्रदक्षिणं परिक्रम्य-कृत्वा सुदुष्करं कर्म जानता वाप्यजनता ॥ मृत्युकालवशं ज्ञात्वा नरःपंचत्वमागतं ॥ १ ॥ धर्माधर्मसमायुक्तं लोभमोहसमावृतं ॥ दहेयं सर्वगात्राणि दिव्यान् लोकान् सगच्छतु ॥ २ ॥ इति मंत्रद्वयेन पुंसः शिरोदेशे (स्त्रियः पाददेशे) आग्निंदत्वा चितामादीपयेत् । ततः उत्तराभिमुखौ लौकिकं प्रेषंकृत्वा गाढं रोदनं करोति । ततः प्रेते सशेषे दग्धे- अमुकगोत्र अमुकप्रेत चितादाह-जनिततापोपशमनार्थमेषतिलतोयांजालिस्तवोपातिष्ठतां इति

तिलतोयांजलिं भूमौदत्वा सर्व्येसे जलपूर्णं कुंभं गृहीत्वा श्मशानास्थितं नातिस्थूलं अस्फुटितं श्लक्ष्णमश्मानमादाय कुंभस्य प्रष्ठभागे तेनाश्मना छिद्रं कृत्वा प्रेतपाददेशादारभ्य तत्पर्यंतं परितः अप्रदाक्षिणं परिव्रजन् पाददशे एव तेनैवाश्मना द्वितीयं छिद्रंकृत्वा पुनः प्राग्वत्परिक्रम्य तथैव तृतीयछिद्रं कृत्वा पुनः प्राग्वत्परिक्रम्य प्रेतशिरोदेशे कुंभ स्फोटयेत् । ततः सर्वे तमश्मानं गृहीत्वा सव्यावृत्ता भूत्वा पृष्टतोऽनवेक्षमाणाः कनिष्ठपुरःसराः कर्तारं पुरस्कृत्य नद्यादि जलाशयं गच्छेयुः । ततः कर्ता परिहितं वस्त्रं प्रक्षाल्य तदेव परिधाय उत्तरदानाभिज्ञं कंचित्पुरुषं शालकंवा " उदकं कारिष्यामहे " इत्युदकं याचते, सच ( शतवर्षन्यूने प्रेते ) " माचैवं कुरुध्वं " इति प्रतिवदेत् । ( शतवर्षोर्ध्वप्रेते: " कुरुध्वं " इति प्रतिवचनं ) ततः सर्वे सपिंडाः सगोत्रिण स्त्रियश्चापि मुक्तकेशा एकवाससः दाक्षिणाभिमुखा महाजले शरीरमलं परिहितं वस्त्रंच प्रक्षाल्य तत्परिधाय सर्वे युगपन्निमज्य वामहस्तानामिकया " अपनः शोशुचदघम् " इति जलावलोडनं कृत्वा सचैलं स्नात्वा शुचौ तीरे दाक्षिणाग्रेषु दर्भेषु निहिते अश्मनि ( येनाश्मना कुंभछिद्राणि कृतानि तस्मिन् ) अपसव्येन " अमुकगोत्र अमुकप्रेत एतत्ते तिलोदकमुपतिष्ठतां " इति सतिलं एकैकं जलांजलिं दाक्षिण-

हस्तेन पितृतीर्थेन सव्योत्तरपाणिना युगपद्युग्मा दद्युः : ब्रह्मचारी तु नदद्यात्। पितृमातृगुर्वाचार्यमातामहमातामहीभ्यः सोऽपि दद्यात् । शववाहकैर्जलांजलिर्देयः । अन्ये सुहृदो दद्युर्नवा । दानेऽपि नाश्मानियमः । पतितव्रात्यादयो नदद्युः । ततः सर्वे सापिंडादयः शवस्पर्शितश्च आन्यानि वासांसि परिधाय स्नानवस्त्राण्यधोदशानि सकृदेव निष्पीडय शोषणार्थमुदग्दशानि वितत्य तृणवति शुचौ देशे उपविशेयुः उपविष्टानां तेषां वृद्धाः सुहृदः पुराणेतिहासकथाकथनादभिः संसारानित्यतां ख्यापयंतः पुत्रादिनां संबंधिनां शोकमपनयेयुः । तिलांजलिदानानंतरं अश्रुपातं नकुर्यात् । दिनदाहे आतारकोदयात् , रात्रिदाहे आसूर्योदयात्तत्रैव वसेरिन्। ततः सर्वे पश्चादनवलोकयंतः अधोमुखा कनिष्ठा नग्रतः कृत्वा पंक्तीभूताग्रामं प्रविश्य गृहद्वारेत्रीणि निंबपत्राणि दंतैर्विदश्य ' शमीपापं व्यपोहतु ' इति शमीं, ' अश्मेव स्थिरोभूयासं ' इति दृषदं, ' अग्निर्नः शर्मयच्छतु ' इत्यग्निं, तूर्ष्णिं उदकं, गोमयं, सर्षपान्, तैलं, दूर्वाः, प्रवालान् , वृषभंच यथाक्रममालभ्य पादेन पाषाणमाक्रम्य गृहंप्रविशेयुः। प्रेतदीपिकायां- दाहोत्तरं उदकदानात्प्राक् दाहजनिततापोपशमनार्थं दहनश्राद्धं, नग्नप्रच्छादनश्राद्धं, मनुष्यलोकात्प्रेतलोकं गच्छतः प्रेतस्य पथिक्षुधोपशमनार्थं पाथेय

श्राद्धं इति श्राद्धत्रयमुपादिष्टम्। तेषां श्राद्धानां ब्रह्मसूत्र भाष्यकृद्धरिहरगदाधरदीक्षितादिभिः प्राचीनप्रयोगनिबंधृभिश्च नोक्तत्वान्नात्र संग्रहः कृतः। अस्मिन् दिने क्रीतं सुम्धोद्यो लब्धं वाऽश्नीयुः। गोत्रजादीनां तद्दिने तद्गृह एव भोजनं। अक्षारलवणपयोमिष्टापूपपायसादि यावदाशौचं दिवैवाश्नीयुः। हविष्यान्नं भुंजीरन्। लेखनहर्षोच्चासनोत्कृष्ट वस्त्रादिधारणतैलाभ्यंगस्त्रीसंगखट्वाशयनान्यस्पर्शनादी निवर्जयेयुः। रात्रौ लगुडहस्ताः प्रथगेव स्तृणास्त्रतभूमौ शयीरन्। पुत्रादीनां यावदाशौचमेते नियमः अन्येषां त्रिरात्रं। बालवृद्धातुराणां नैते नियमाः। कर्ता- भोजनकाले सघृतमन्नमादाय- 'अमुकगोत्राय इदमन्नमुपतिष्ठतां' इति गृहोपरि भोजनस्थलसमीपे भूमौ वा दद्यात्। अस्यां रात्रौ एकस्मिन्मृन्मये पात्रे उदकं द्वितीये क्षीरं कृत्वा यष्ट्यादिकमवलंब्याकाशे धारयेत्। तत्र "अमुकगोत्र अमुकप्रेत अत्र स्नाहि' इत्युदकं, 'अमुकगोत्र अमुकप्रेत इदं पिब' इति क्षीरमवलंबयेत्। एतत्क्षीरोदकावलंबनं एकाहं दिनत्रयं दशाहं वा रात्रौ कर्तव्यमिति केचित्। दशरात्रपर्यंतं प्रेतहिताय शिवालये चैत्यवृक्षमूले क्रियाकर्तुः समीपे ( मरणस्थले ) च दीपान्निदध्युः॥ मरणस्थले दीपनिधानमिदानींतनः शिष्टाचारः। मृन्मये पात्रे तिलतैलेन दीपं प्रज्वाल्य 'अमुक

गोत्र अमुकप्रेत तव यममार्गसंतरणे घोरांधकारनिवृत्यर्थं अद्यारभ्य दशरात्रपर्यंतं मयानवच्छिन्नं प्रज्वालिष्यमाण एष दीपस्तवोपतिष्ठतां ' इति धान्योपरि दक्षिणाग्निमुखं दीपं स्थापयेत् ।

॥ धनिष्ठादिपंचकमरणविधिः ॥

धनिष्ठार्द्धमारभ्य रेवत्यंतानि पंचनक्षत्राणि पंचकसंज्ञकानि । तेषु नक्षत्रेषु कस्यचिन्मरणसंभवे कुलस्य महदरिष्टं संभवति । तच्छांत्यर्थं ब्रह्मपुराणोक्तविधिना पुत्तलेनसाकं शवं दग्ध्वा सूतकांते शांतिं कुर्यात् । नक्षत्रांतरे मृतस्य पंचके दाहप्राप्तौ पुत्तलविधिरेव नशांतिकं । पंचक मृतस्य नक्षत्रांतरेऽश्विन्यादौ दाहप्राप्तौ सूतकांते शांतिरेव नपुत्तलविधिः । अथ प्रयोगः— देशकालौस्मृत्वा अमुक गोत्रस्य अ० प्रेतस्य धनिष्ठापंचकमरणसूचितं वंशारिष्ट विनाशार्थं पंचकमरणविधिं करिष्ये । इति संकल्प्य दर्भ मयी यवपिष्टानुलिप्ता ऊर्णासूत्र वेष्टिताः पंचप्रतिमाः कृत्वा गंधपुष्पैः संपूज्य प्रेतस्य शिरसि प्रथमां । दक्षिण कुक्षौ द्वितीयां । वामकुक्षौ तृतीयां । नाभौ चतुर्थीं । पादयोः पंचमीं । इति न्यस्य तासुक्रमेणाज्यं जुहुयात् । तत्रमंत्राः— प्रेतवाहाय स्वाहा इदं प्रेतवाहाय नमम । १ प्रेतसखाय० इदं प्रेतसखाय० २ प्रेतपाय० इदंप्रेत० ३ प्रेतभूमिपाय०

इदं प्रेतभूमिपाय० ४ प्रेतहर्त्रेस्वाहा इदं प्रेतहर्त्रे० इति ततोविधिना शवंदहेत् ॥ ततः सूतकांते शांतिः ॥

२२ ॥ त्रिपादनक्षत्रमरणविधिः ॥

पुनर्वसूत्तराषाढाकृत्तिकोत्तराफाल्गुनीपूर्वाभाद्रपदा विशाखेति नक्षत्राणि त्रिपादसंज्ञकानि । मृगचित्राधनिष्ठेति नक्षत्रत्रयं द्विपादसंज्ञकं । एषुनक्षत्रेषु मरणेऽपिवंशारिष्टं । अत्रापिपुत्तलविधिः शांतिश्चावश्यकयौ। तत्रप्रयोगः देशकालौ संकीर्त्य-- अपसव्यं- अ०गोत्रस्य अ०प्रेतस्य त्रिपादनक्षत्र मरणजनितदोषोपशांत्यर्थं त्रिपादर्क्षमरणविधिं करिष्ये । इति संकल्प्य पंचकविधिवत् पुत्तलिकात्रयं निर्माय संपूज्य दाहसमये प्रथमां शिरसि । द्वितीयां हृदये। तृतीयां नाभौ। न्यास्य तदुपरि क्रमेण घृताहुतिर्जुहुयात् । प्रेतवाहाय० प्रेतवाहायेद० ॥ १ ॥ प्रेतसखाय० इदं प्रेतसखाय० ॥ २ ॥ प्रेतपाय० इदं प्रेतपाय० । इति ततोविधिना शवंदहेत् । सूतकांते शांतिः ॥

२३ ॥ त्रिपुष्करद्विपुष्करमरणविधिः ॥

भद्रातिथि ( द्वितीया सप्तमी द्वादशी ) रविमंगल मंदवारांत्रिपादनक्षत्रयोगे त्रिपुष्करयोगः । एतेषु द्वयोर्योगे द्विपुष्करयोगः । एतयोर्मरणेऽपि वंशारिष्ट । तच्छमनाय त्रिपुष्करादिविधिः । तत्रप्रयोगः । देशादि संकीर्त्य अपसव्यं

अ० गोत्रस्य, अ० प्रेतस्य त्रिपुष्करयोगे मरणजनितवंशारिष्ट विनाशार्थं कृच्छ्रत्रयप्रायाश्चित्तं यथाशक्ति द्रव्यदानद्वाराहमाचरिष्ये। पुनर्देशादि संकीर्त्य अपसव्यं अ० गोत्रस्य अ० प्रेतस्य त्रिपुष्करयोगे मरणजनित० निरासार्थं त्रिपुष्कर विधिं करिष्ये। इति संकल्प्य शिष्टंत्रिपादवत्कार्यं। द्विपुष्करयोगे-द्विपुष्करयोगमरण० इति संकल्पः- अत्र प्रतिमाद्वयं कृत्वा प्रेताशिरस्येकां नेत्रयोपरां निधाय क्रमेण प्रेत बाहप्रेतसखइतिनामभ्यां घृताहुतिहोमः। शिष्टं त्रिपादवत् ॥

॥ पालाशप्रतिकृतिदाहविधिः ॥

तत्रादौ पित्रादीनां विदेशमरणे पुत्रादिः पराकाद्वयं अष्टौ कृच्छ्रांश्च प्रायाश्चित्तं कृत्वा तदास्थीनि प्राग्वद्दहेत्। अस्थ्नां श्वचांडालादिस्पर्शे पंचगव्यगंगोदकाभ्यां प्रक्षाल्य दाहः। तेषामप्यलाभे पालाशवृंतैः प्रतिकृतिं कृत्वा तस्या दाहः। यथा- पुत्रादिः कर्ता आचम्य प्राणायामान्कृत्य देशकालौ संकीर्त्य प्राचीनावीती अमुकगोत्रस्य अमुकप्रेतस्य पित्रादेर्विदेशमरणेन मंत्राग्निदाहराहतस्य प्रेतस्य प्रेतत्व विमुक्त्या उत्तमलोकप्राप्त्यर्थं अस्थ्यश्मोत्तरीयाभावेन तत्सम्पत्तिद्वारौर्ध्वदेहिककर्माधिकारार्थं पालाशविधिं करिष्ये। इति यवपिष्टेन शरीरं निर्माय भूमौ प्राक्शिरः कृष्णाजिनमा

स्तीर्य तत्र यवपिष्टनिर्मितं शरीरं उदक्शिरो निधाय तस्मिन् पलाशवृन्तानि विन्यसेत् । शिरसि चत्वारिंशत् ४० । ग्रीवायां दश १० । बाव्होः प्रत्येकं पंचाशत् इति शतम् १०० । करांगुलीषु सर्वासु दश १० । उदरे त्रिंशत् ३० । जठरे विंशतिः २० । शिश्ने चत्वारि ४ । अंडयोः प्रत्येकं त्रय इति षट् ६ । ऊर्वोः प्रत्येकं पंचाशदिति शतं १०० । जंघातः पादतलांतं यावत् पादयोः प्रत्येकं पंचदशेति त्रिंशत् ३० । सर्वासु पादांगुलीषु दश १० । इति षष्ठ्यधिकशत त्रयमितपलाशवृंतानि विन्यस्य ऊर्णासूत्रेण शरीरं बध्वा जललोडित यवपिष्टेनानुलिंपेत् । ततः शक्तौ सत्यां वक्ष्य माणान्यपि न्यसेत् । मूर्धस्थाने नारिकेलफलं अलाबुफलं वा, ललाटे कदलीपत्रं, दंते दाडिमबिजानि, कर्णयोः पलाशपत्रे, नेत्रयोः कपर्दकौ, नासिकायां तिलपुष्पं, नाभौ कमलं स्तनयोर्जंबीरफलद्वयं, वाते मनःशिलां, पित्ते हरि-तालं, कफे समुद्रफेनं, रुधिरे मधु, पुरीषे गोमयं, मूत्रे गोमयं, रेतसि पारदं वृषणयोर्वृन्ताकद्वयं, शिश्नेगृंजनं, केशेषु वटप्ररोहान् , लोमसु ऊर्णाः, इति विन्यस्य मांस-स्थाने माषपिष्टेन लेपयेत् ततः पंचगव्यैः पंचामृतैश्च संप्रोक्ष्य-पुनर्मनः पुनरायुर्म आगात्पुनश्चक्षुः पुनश्रोत्रं म आगात् । पुनः प्राणः पुनरात्मा म आगाद्वैश्वानरो अदब्धस्तनू

अग्निर्मा पातु दुरितादवद्यात् ॥ १ ॥ इति प्राणप्रवेशं भावयित्वा--शिरो मे श्रीर्यशो मुखं त्विषि : केशाश्च श्मश्रूणि ॥ राजा मे प्राणो अमृतं सम्राट् चक्षुर्विराट् श्रोत्रं ॥ १ ॥ जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड्भामः ॥ मोदाः प्रमोदा अंगुली रंगानि मित्रं मे सहः ॥ २ ॥ बाहू मे बलमिंद्रियं हस्तौ मे कर्म वीर्यं ॥ आत्मा क्षत्रमुरो मम ॥ ३ ॥ पृष्टीर्मे राष्ट्रमुदरमंसौ ग्रीवाश्च श्रोणी ॥ ऊरू अरत्नी जानुनी विशो मेऽगानि सर्वतः॥ ४ ॥ नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसत् ॥ आनन्दनन्दा आंडौ मे भगः सौभाग्यं पसः ॥ ५ ॥ जंघाभ्यां पद्भ्यां धर्मोऽसि विशि राजाप्रतिष्ठितः ॥ प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु ॥ ६ ॥ प्रत्यंगेषु प्रतितिष्ठाम्यात्मन्प्रतिप्राणेषु प्रतितिष्ठामि पुष्टे ॥ प्रतिद्यावा पृथिव्योः प्रतितिष्ठामि यज्ञे ॥ ७ ॥ इति सर्वांगेषु प्राणान्नियोज्य स्नापयित्वा चंदनेनानुलिप्य वस्त्रे परिधाप्य यज्ञोपवीते धारयित्वा शुभ्रगंधमाल्यादिभिरलंकृत्य 'अयं सः देवदत्तः' इत्यभिमृश्य पूर्ववाद्विधिनादहेत् । पलाशवृंता

भावे कुशमयीं प्रतिकृतिं कुर्यात् । पर्णशर ( पालाशप्रतिकृति ) दाहे सपिंडानां त्र्यहमाशौचं । पूर्वमगृहिताशौचयोः भार्या पुत्रयोर्दशाहमेव । गृहीताशौचयोस्तु तयोरपित्रिरात्रं । पत्निसंस्कारे पत्युश्चैवमेव । सपत्न्योः परस्परं चेवमेवाशौचं । सापत्नमातुर्दशाहानंतरं त्र्यहं कार्यं सपत्नीपुत्रेण ॥

॥ प्रथमादिनाविधिः ॥

कर्ता आर्द्रवस्त्रस्तास्मिन् दिने तत्काल एव दिनान्तरे वा पूर्वाण्ह एव ग्रामाद्बहिः प्रागुदीच्यां सरित्संगमादि जलाशयसन्निधौ गत्वा शुध्दां भुवं संशोध्य तत्र दशाहान्तं कर्मकुर्यात् । स्नात्वा आर्द्रे अहते वाससी परिधाय आचम्य देशकालौ स्मृत्वा सोत्तरीयः प्राचीनावीती दाक्षि-णाभिमुखः अमुकगोत्रस्य अमुकप्रेतस्य पित्रादेः ( स्त्रियः— अमुकगोत्रायाः अमुक- ( देवीदायाः प्रेतायाः ) प्रेतत्व निवृत्योत्तमलोकप्राप्त्यर्थं प्रथमदिनाविधिं कारिष्ये । इति संकल्प्य ताम्रादिमयं नवभाण्डं संशोध्य तत्र पिंडार्थं सकृ-त्प्रक्षालितान् प्रसृतिपरिमितान् तंडुलान् सोदकान्निधाय तत्पात्रं लौकिकाग्नावधिश्रित्य स्वयं चरुं श्रपयित्वा मृत्तिका-स्नानादि कुर्यात् । देशकालौ संकीर्त्य प्राचीनावीती अमुक गोत्रस्य अ० प्रेतस्य पित्रादेः प्रेतत्वनिवृत्या उत्तमलोक प्राप्त्यर्थं प्रथमेऽहनि दाहजनिततापोपशमनार्थं मृत्तिका-

स्नानादि करिष्ये— इति संकल्प्य— उदुत्यं जातवेदसं देवं वंहतिकेतवः ॥ दृशे विश्वायसूर्यं ॥ इति शुद्धमृद-मादाय- आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यंच ॥ हिरण्ययेन सविता रथेना देवोयाति भुवनानि पश्यन् ॥ इति सूर्याय दर्शयित्वा- इदं विष्णुर्विचक्रमे त्रेधा निदधे-- पदं ॥ समूळ्हमस्यपा सुरे ॥ इति सर्वांगे लिंपेत् । स्नात्वा आचमेत् । पुनरेवं द्विवारं कार्यं । तत आचम्य अद्येत्यादि प्राचीनावीती पित्रादेः अ०गोत्रस्य अ०प्रेतस्य दाहजनिततापोपशमनार्थं तिलतोयांजलिदानं करिष्ये इति संकल्प्य कुशोपर्यश्मानं निधाय तदुपरि 'अ०गोत्र अ०प्रेत दाहजनिततापोपशमनार्थं एष तिलतोयांजलिस्तवोपतिष्ठतां' इति दाक्षिणाभिमुखः तिलतोयांजलिं दद्यात् । त्र्यंजलि स्नानं कार्यं । ( तिलांजलि संख्या- प्रत्यहं एकैक इति दश त्रयस्त्रय इति त्रिंशत् , एकैक वृद्धिः इति पंचपंचाशत् , दशदशेति शतं, द्वयोत्तरं वृद्धिर्वेति दशोत्तरं शतं । एषां पक्षाणामन्यतमपक्षाश्रयेण तिलांजालिदानं कार्यम् ) । ततः स्नात्वा आचम्य देशकालौ संकीर्त्य प्रचीनावीती अ०गोत्रस्य अ०प्रेतस्य आद्येऽहनि शिरोवयवनिष्पत्यर्थं अवयवपूरक पिंडदानं करिष्ये इति संकल्प्य- तिल सर्पिमधुशर्करापयो-मिश्रितं चरुपिंडं कृत्वा- अ०गोत्र अ०प्रेत इदं कुशासनं

तवोपतिष्ठतां इति दाक्षिणाग्रकुशानास्तीर्य तदुपरि- अ०गोत्र अ०प्रेत इदमवनेजनं तवोपतिष्ठतां इति जलंपितृतीर्थेन दत्वा ततः पिंडंगृहीत्वा अमुकगोत्र अ०प्रेत प्रथमेऽहनि शिरोवयवानिष्पत्त्यर्थं एषपिंडस्तवोपातिष्ठतां, इति कुशोपरि दत्वा अ०गोत्र अ०प्रेत इदं प्रत्यवनेजनं तवोपातिष्ठतां, इति प्रत्यवनेजनं, अ०गोत्र अ०प्रेत इदं तिलोदकं तवोपातिष्ठतां इति तिलोदकं- अ०गोत्र अ०प्रेत एष गंधस्तवोपतिष्ठतां इति गंधं- अ०गोत्र अ०प्रेत एते तिलास्तवोपातिष्ठंतां, इति तिलान् – अ०गोत्र अ०प्रेत इदं भृंगराजपत्रं तवोपतिष्ठतां, इति भृंगराजपत्रं- अ०गोत्र अ०प्रेत एष धूपस्तवोपातिष्ठतां, इति धूपं- अ० गोत्र अ०प्रेत एष दीपस्तवोपातिष्ठतां, इति दीपं- अ०गोत्र अ०प्रेत इदं सूत्रं तवोपतिष्ठतां, इत्यूर्णासूत्रं, अ०गोत्र अ०प्रेत इदं नैवेद्यं तवोपातिष्ठतां, इति आमान्नं मध्वक्तं- अ०गोत्र अ०प्रेत इदं तांबूलं तवोपतिष्ठतां, इति तांबूलं- अ०गोत्र अ०प्रेत इदं दाक्षिणा- तवोपातिष्ठतां, इति दाक्षिणां दत्वा तिलकुशजलान्यादाय- अ०गोत्र अ०प्रेत इमे गंधादिसर्वोपचारास्तवोपातिष्ठंतां। ततस्तिलस्तोयपात्रं हस्तेगृहीत्वा अ०गोत्र अ०प्रेत चिता- दाहजनिततापोपशमनाय एतत्तिलतोयपात्रं तवोपतिष्ठतां, इति पिंडसमीपे निधाय कृतांजलिः- अनादिनिधनोदेवः

शंखचक्रगदाधरः "अक्षय्यः पुंडरीकाक्षः प्रेतमोक्षप्रदोस्तु ते ॥ इति पठित्वा अ०गोत्रस्य अ०प्रेतस्य अनेन पिंडदानेन प्रेतत्वनिवृत्तिरस्तु, क्षुत्तृषानिवृत्तिरस्तु, शिरोनिष्पत्तिरस्तु। इत्युक्त्वा पिंडादिकं सर्वं जले प्रवाह्य स्नात्वाऽऽचामेत् ॥

॥ अथ नवश्राद्धम् ॥

आचमनं तूष्णीं प्राणायामः पवित्रधारणं देशकालोत्कीर्तनं अपसव्यं अ०गोत्रस्य अ०प्रेतस्य (स्त्रियाः गोत्रायाः प्रेतायाः) प्रेतत्वविमुक्त्यर्थं प्रथमेऽहनि नवश्राद्धं करिष्ये। इति संकल्प्य कुशोऽसि त्वं पवित्रोऽसि ब्रह्मणानिर्मितःपुरा। त्वयि स्नाते स सुस्नातो यस्यैतद्ग्रंथिबंधनं। इति कुशबटुग्रंथिबंधनं। इमंलोकं परित्यज्यगतोऽसि परमांगतिं। मनसावायुभूतेन कुशात्वां योजयाम्यहं॥ इति कुशबटुस्थापनं। ततः कुशबटोरुपरि- अमुकगोत्र अमुकप्रेत अयंतेक्षण उपतिष्ठतां। एवमग्रे सर्वत्र। अमुकगोत्र अमुकप्रेत इदं ते पाद्यमुपतिष्ठतां अ०गोत्र अ०प्रेत इदंते आसनमुपतिष्ठतां। अ०गोत्र अ०प्रेत अयंते अर्घउपतिष्ठतां। अ०गोत्र अ०प्रेत इदंते अन्नं ( आमंवा ) उपतिष्ठतां। अ०गोत्र अ०प्रेत स्वदितं इति तृप्तिप्रश्नः। सुस्वादितं इति प्रतिवचनं। अ०गोत्र अ०प्रेत पिंडस्याधो दर्भासनं तवोपतिष्ठतां। अ०गोत्र अ०प्रेत प्रथमेऽहनि विषमश्राद्धे अयंपिंडस्तवो-

पातिष्ठतां । अ०गोत्र अ०प्रेत इदंते सूत्रमुपतिष्ठतां । तिल-जलकुशानादाय- अमु०गोत्र अ०प्रेत इदंते दत्तनवश्राद्धमुप-तिष्ठतां । इति कुशबटोरुपरि अक्षय्योदकदानं । अमु०गोत्र अ०प्रेत इयंते दाक्षिणोपतिष्ठतां । इति कुशबटोर्दाक्षिणादानं । अभिरम्यतां इति कुशबटोर्विसिर्जनं । अभिरताः स्म इति प्रतिवचनं । अनादिनिधनोदेवः शंखचक्र गदाधरः । अक्षय्यः पुंडरीकाक्षप्रेतमोक्षमदोऽस्तुते ॥ अतसीपुष्यसंका-शंपीतनिर्मलवाससं । ये नमस्यंतिगेविंदंनतेषां विद्यतेभयं । अनेनापिंडदानेन अ०गोत्रस्य प्रेतस्य प्रेतत्त्वनिवृत्तिरस्तु इति पठित्वा पिंडं जलेप्रवाह्य पिंडस्थानादुत्तरतः गर्तं निधाय तत्र तिलकल्कोष्णाद्दकानि प्रक्षिप्य अमुकगोत्र अमु-कप्रेत एतैः तिलकल्कोष्णोदकैः अध्वश्रमपरिहारार्थं स्नाहीत्युक्त्वा स्नात्वाचम्य गृहं व्रजेत् । इदं नवश्राद्धं प्रथमे तृतीये पंचमे सप्तमे नवमे एकादशे चाहनि कार्यम् । अवयवपूरकपिंडदाननवश्राद्धयोः पौर्वापर्ये विकल्पः ।

॥ अथास्थिसंचयनश्राद्धम् ॥

तच्च अशौचमध्ये प्रथमे द्वितीये चतुर्थे सप्तमे नवमे वादिनेकार्यं । तत्र द्विपादात्रिपादनक्षत्राणि कर्तुर्जन्मनक्षत्रं वर्ज्यम् । संभवे भौममंदवारा नंदातिथयश्च वर्ज्याः । अस्थ्नांश्वसूकरशूद्रादि स्पर्शे पंचगव्येन शालिग्रामतुलस्युद-

केत प्रोक्षणं । घटदुग्धतिलकुशहारिद्रवस्त्रपलाशपर्ण-वृंतखनित्रयक्षकर्दमशैवालजलपात्रघृतपिंडबलिदानसामग्रीस-हितः दाहदेशं गत्वा स्नात्वा आचम्य प्राणनायम्य देश-कालौ संकीर्त्य प्राचीनावीती दाक्षिणाभिमुखः- अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्वविमुक्तया उत्तमलोकप्राप्त्यर्थं अस्थिसं-चयने प्रेतनाम्ना पिंडदानं करिष्ये इतिसंकल्प्य दक्षिणाग्र-कुशानास्तीर्य अमुकगोत्र अमुकप्रेत इदमवनेजनं तवोपति-ष्ठतां । अमुकगो अ० अस्थिसंचयने एषपिंडो मयादत्तः प्रेतनाम्नस्तवोपतिष्ठतां । अ०गोत्र अ०प्रेत इदं प्रत्यव-नेजनं तवोपतिष्ठतां । अ०गोत्र अ०प्रेत इदं तिलोदकं तवोपतिष्ठतां । अ०गोत्र अ०प्रेत इमे गंधादिसर्वोपचारा उपतिष्ठंतां । अनादिनिधनोदेवः० ॥ इति प्रार्थ्य पिंडं विसृज्य अनेन अस्थिसंचयने प्रेतनाम्नापिंडदानेन प्रेतस्य प्रेतत्वनिवृत्तिरस्तु । उत्तमलोकप्राप्तिरस्तु । अग्रेतनकर्मा-धिकारसम्पदस्तु ।

६० ॥ अथश्मशानवासिदेवताबलिदानं ॥

देशादिसंकीर्त्य अपसव्यं अमुकगोत्रस्व अमुकप्रेतस्य प्रेतत्त्वविमुक्तिद्वारोत्तमलोकावाप्त्यर्थं श्मशावासिदेवताभ्यो बलिदानं करिष्ये । ततः कर्त्रासह सर्वे गोत्रजाः प्राचीनावी-तिनः श्मशानाग्नेरासमंतात् भूमावेव श्मशानवासिदेवता-

पूजनं । तत्रमंत्रः । नमः क्रव्यादमुख्यदेवताभ्यः आसनान्यु-
पतिष्ठंतां । एवंसर्वत्र । पाद्यान्युपतिष्ठंतां ॥ अर्घाउपतिष्ठंतां ।
गंधाउप० । पुष्पाण्यु० । धूपाउ० । दीपाउ० । नैवे-
द्यान्यु० । तांबूलान्यु० । दक्षिणाउ० । ततो नानाविध
पक्वभक्ष्यभोज्यपायसवन्यफलमूलपूरितानि मृन्मय-
पात्राणि। सोदकुंभानि तत्रतत्रानिधाय ॥ येऽस्मिन् श्मशाने
देवाः स्युभर्गव्रतः सनातनाः । तेऽस्मत्सकाशाद्गृह्णंतु बलि-
मष्टांगमक्षयं ॥ प्रेतस्यास्य शुभांल्लोकान् प्रयच्छंत्वपि शाश्व-
तान् । अस्माकमायुरारोग्यं सुखंचददतांचिरं । श्मशान-
वासिनोदेवाः शरणं परमागतिः । सर्वेभ्य स्त्वन्नमुदकमक्षय्य
मुपतिष्ठतां । इति बलीनामुपरि जलं प्रक्षिप्य क्षीरेण बलि-
मभ्युक्षेत् । ततः पिंडार्थंचरुं श्रपयित्वा यवपिष्टेन चतस्त्रः
पोलिकाः , अष्टौ पादुकाः , चत्वारि छत्राणिच सम्पाद्य
गोमयेन श्मशानभुवमुपलिप्य त्रिकोणवेदिकां कृत्वा हरिद्रा-
दिना अलंकृत्य तत्र दक्षिणवायव्यपश्चिमदिक्षु एकैकमिति
उदकपूर्णान् चतुरः कुंभान् स्थापयित्वा तेषामुपरि प्रत्येक
मेकैकां पोलिकां तदुपरि एकैकं पिंडं , द्वेद्वे पादुके , एकैकं
छत्रं , एकैकं पीतवर्णं ध्वजं पताकांच संस्थाप्य देशकालौ
स्मृत्वा प्राचीनावीती अ०गोत्रस्य अ०प्रेतस्य प्रेतत्वानिवृत्यो
त्तमलोकावाप्त्यर्थं श्मशानवासिदेवताभ्यः पिंडदानं करिष्ये

इति संकल्प्य दक्षिणकुंभे हस्तं निधाय "श्मशानवासि देवेभ्य एष छत्रध्वजपताकापोलिकापादुकासहितः अष्टांग-पिंडो मयादत्तः उपतिष्ठतां । वायव्यकुंभे हस्तंदत्वा- प्रेत सखिभ्यः एष छत्रध्वज० पिंडोमयादत्त उपतिष्ठतां । पश्चिम कुंभे हस्तंदत्त्वा "प्रेताय एषछत्रध्वज० पिंडो मयादत्त उपतिष्ठतां । ईशानकुंभे हस्तंदत्वा यमाय एषछत्रध्वज० पिंडो मयादत्त उपतिष्ठतां । इति पिंडान् दत्वा पिंडोपरि तिलोदकमुपातिष्ठतां । इमे गंधादिसर्वोपचारा उपतिष्ठंतां । अनादिनिधनोदेवः०। अनेन श्मशानवासि देवताभ्यः पिंडदानेन प्रेतस्य प्रेतत्वनिवृत्तिरस्तु। अग्रेतनकर्माधिकारसंपदस्तु ।

॥ अथास्थिसंचयनं ॥

चितासमीपे गत्वा-- देशकालौ संकीर्त्य अपसव्यं अ०गोत्रस्य अ०प्रेतस्य प्रेतत्वविमुक्तिद्वारोत्तमलोक प्राप्त्यर्थं अस्थिसंचयनं करिष्ये । इति संकल्प्य । क्षीरेणाज्येनच चितां संप्रोक्ष्य पलाशवृंतेन शमाशाखया यज्ञीय-वृक्षाशाखयावा अस्थीनि अप्रादक्षिण्येन परिवर्त्य ( भस्माच्छनानिप्रकटानि विधाय ) अंगुष्ठोपकनिष्ठिकाभ्यामादाय नवेकुंभे प्रास्यति । तत्र शिरसो वक्षसः पाणिभ्यां पार्श्वभ्यां पादाभ्यांचाप्रदक्षिणं ग्रहणे क्रमः । शाखायाः श्मशाने प्रक्षेपः । शमीपर्णानि शैवालं कर्दमंच अस्थिसंचये प्रक्षिप्य

घृतेनाभ्याज्यास्थ्नां चंदनागरुकर्पूरकेशरकस्तूरिकाप्रभृति सुगंधिद्रव्यैर्मिश्रणं कृत्वा कुंभं क्षौमवस्त्रेणावेष्टय वृक्षसमीपे देवालये आरामेवा अभ्रांशिन्यां भूमौ दाक्षिणपूर्वायतां कर्षूं खात्वा तत्र कुशानास्तीर्य तदुपरि हरिद्रारांजितं वस्त्रखण्डं-चास्तीर्य तस्मिन्वस्त्रे- 'वाङ्गनिपामि' इति 'आत्वा मनसा नार्तेनवाचा ब्राह्मणा त्रय्या विद्याया पृथिव्यामाक्षि-कायामपा॰रसेन निवपाम्यसौ' (असौस्थाने प्रेतनामोद्देशः) इति मंत्रेणवा अस्थिकुंभंनिधाय। तदुपरि पाषाणं निधाय ततोयथाकुंभोनदृश्यते तथा तदुपरि मृदंनिक्षिप्य समीकरणं। ततः शेषास्थिभस्मनां जले प्रक्षेपः। पूजासंबंधि अन्नस्य जले प्रक्षेपः। तद्वाद्विभ्यो वा दानं। श्मशानभूमि गोमयोदकेन संप्रोक्ष्य तत्रैकपिंडस्थापनं। तत्रमंत्रः। येऽस्मिन् श्मशाने॰ मक्षय्यमुपातिष्ठतु। तदुपरि गंधपुष्प धूपदीपोद कुंभस्थापनं। श्मशानभूमेर्दाक्षिणतः बाहुमात्रिं शमशिखांनिखनेत्। ततोऽप्रदाक्षिणं चिताभूमिं कृत्वा पश्चादनवेक्षमाणाः स्नानार्थं जलाशयंगत्वा स्नायात्। यद्वातास्मिन्नेव समये तमास्थिकुंभं गृहीत्वा गंगादीतीर्थसमीमे गत्वाऽस्थीनिनिष्कास्य जले क्षिपेत्। अस्मिन्पक्षे गर्तकरणाभावः। कुशास्तरणं हरिद्रा लापितवस्त्रास्तरणं च कुंभएव। मंत्रपाठः कुंभमध्येऽस्थि-प्रक्षेप एव। इत्यस्थिसंचयनं॥

॥ ६५ तीर्थेऽस्थिक्षेपविधिः ॥

यत्रास्थीनि निखातानि तं देशं सचैलस्नानपूर्वकं पृथग्गोमूत्रादिभिः प्रोक्षेत् । तत्र गायत्र्या गोमूत्रेण । गंधद्वारामिति गोमयेन । आप्यायस्वेतिक्षीरेण । दधिक्राव्ण इति दध्ना । घृतंमिमिक्ष इति घृतेन । देवस्यत्वेति कुशोदकेन उपसर्पेति चतुसृणां शंखः पितरस्त्रिष्टुप् भूप्रार्थनखननोद्धरणास्थिग्रहणेषुविनियोगः । उपसर्पमातर० इति भूमिंप्रार्थ्य । उच्छ्रूञ्चस्व० इति खात्वा उच्छ्रूञ्चमान० इति मृदमुद्धृत्य उत्तेस्तभ्नामि० इत्यस्थीन्यादाय जलाशयमेत्य तानि प्रक्षाल्यास्थीनि स्पृष्ट्वा विधिनास्नायात् । केचित्तु अस्थीनि पुनः पुनस्पृष्ट्वैवाष्टोत्तर शतवारं स्नायादित्याहुः । ततः स्पृष्ट्वैव प्रागुक्तैः पंचगव्यमंत्रैः पृथक् पृथक् स्नापयेत् । तत एतोन्विंद्रंस्तवाम० इति तृचेन शुद्धोदकेन प्रक्षाल्य सास्थिर्दशविधानि स्नानानि कुर्यात् तत्र मानस्तोके० इति भस्मना । गंधद्वारा० इति गोमयेन । स्योनापृथिवि० इति मृत्तिकया । पंचगव्यमंत्रैः पंचगव्यैः देवस्यत्वा० इति कुशोदकेन । आपोहिष्ठा० इति तृचेन शुद्धोदकेन । इति । ततोवक्ष्यमाणमंत्रैरस्थ्नां कुशैर्मार्जनं कुर्यात् । तेचमन्त्राः—अतोदेवा० इतिऋक् । एतोन्विंद्रमिति तृचं । शुचिवोहव्या० इति तृचं । अथ सूक्तानि । नतंमहोन० । इतिवा इति ।

स्वादिष्टया० ममाग्नेवर्चो० । कद्रुद्राय० । ततोऽस्थीन्यष्ट-गंधेन यक्षकर्दमेनचानुलेपयेत् । ततो गृहेदेवतागारे जलाशयेवाऽस्थीनि संपूज्य धूपैरुद्धूप्य नीराज्योपहारादिनिवेदयेत् । ततो हिरण्यश्राद्धंकुर्यात् । देशकालौस्मृत्वा अस्मत्पितुरशर्मणोऽमुक गोत्रस्यास्थ्युद्धारशुद्धिनिमित्तं अस्मत्पितृपितामह प्रपितामहानां अमुकामुक शर्मणां अमुक-गोत्राणां वसुरुद्रादित्य स्वरूपाणां पार्वणेनाविधिना हिरण्य-श्राद्धं करिष्ये इति संकल्प्य श्राद्धमार्तांडोक्त हिरण्यश्राद्ध विधिना श्राद्धंकुर्यात् ॥ पुरूरवार्द्रवावत्र विश्वेदेवौ ॥ अन्ने-नामान्नेन सक्तुभिर्वा पिंडदानं । श्राद्धांते तिलतर्पणंच कुर्यात् । अकृतसपिंडिकरणस्यतु प्रागुक्तप्रकारेणैकोद्दिष्ट-विधिना पित्रुद्देशेनैव श्राद्धंकुर्यात् । तत आपोहिष्ठेत्यादिभि-रब्लिंगकैर्मंत्रः वारुणसूक्तैः पावमानसूक्तैः पुरुषसूक्तेनचा-स्थीनि मार्जयित्वा देशकालौ संकीर्त्य- अस्थिशुध्यङ्गं हवनं करिष्ये इति संकल्प्य स्थंडिलेपंचभूसंस्कारपूर्वक-माग्निंप्रतिष्ठाप्योदी रितामित्यष्टर्चेन सूक्तेनाष्टोत्तरशतं घृताक्त तिलाहुतीर्जुहुयात् उदीरतां शंखः पितरास्त्रिष्टुबास्थि शुद्ध्यंग हवने विनियोगः । तत्रत्रयोदशावृत्तिभिः प्रतिमंत्रं हवनेन चतुरधिकशतमाहुतयो भवंति । अवशिष्टाश्चतस्र आहुती रंतिमेन मंत्रेण मंत्रावृत्याजुहुयात् । अपिवासूक्तांते स्वाहा-

कारं कृत्वा सूक्तावृत्त्याष्टोत्तरशतमाहुतीर्जुहुयात् । सर्वत्र इदं पितृभ्यो नममेतित्यागः । एवं होमंसमाप्य अस्थिषु हेमराप्यैखण्डानि मौक्तिकप्रवाल नीलमणींश्चप्रक्षिप्य अजिनकंबलदर्भभूर्जपत्रशाणपट्टवस्त्रताडपत्राणां क्रमेण सप्तधासंवेष्टय ताम्रसंपुटे प्रक्षिप्य तंवेष्टनास्थिगर्भं ताम्रसंपुट मादाय तीर्थंगच्छेत् । तत्रानि यमाः- मूत्रपुरीषोत्सर्गकाले आचमनकालेच नास्थीनि धारयेत् । शूद्रयवनांत्यजादिकां स्वहीनजातिमस्थिधारणकाले न स्पृशेत् । ततस्तीर्थं प्राप्य स्नात्वा— आचमनादि देशकालौ स्मृत्वा अमुकगोत्रस्या-मुकशर्मण्यः ममपित्रादेः समस्तपापक्षयपूर्वकं ब्रह्मलोकादि प्राप्तये अमुकतीर्थे अस्थिप्रक्षेपमहंकरिष्ये । इति संकल्प्य संभवे अस्थिक्षेपाङ्गपूर्ववद्धिरण्यश्राद्धं कृत्वा यथाशक्ति हिरण्यादि विप्रेभ्यो दत्वाऽस्थीनि शुद्धवस्त्रे पलाशपत्रपुटे वा निधाय पंचगव्यैः क्षालयित्वा गंधादिभिः संपूज्य हिरण्य शकलमाल्य मधुघृततिलैः सहमृत्पिण्डे निधाय दक्षिणां दिशमवेक्षमाणः-- ‘ नमोऽस्तु धर्मराजाय ’ इति वदन् तीर्थेप्रविश्य नाभिमात्रे जलेस्थित्वा - ‘अमुकगोत्रस्य अमुक शर्मणोऽस्थीनि अस्मिन्नमुकतीर्थे प्रक्षिपामि । सव्मे प्रीतो-भवतु ’ इत्युक्त्वा नम्रोभूत्वा जलेऽस्थीनि निक्षिपेत् । ततः स्नात्वा जलाद्बहिरागत्य भास्वन्तं सूर्यमवेक्ष्य हरिंस्मृत्वा

विप्राय यथाशक्ति रजतदक्षिणां दद्यात् । अमुकगोत्रस्य अमुकशर्मणेऽमुकतीर्थेऽस्थिप्रक्षेपः कृतः, तत्सांगतार्थं रजतमिदं चंद्रदैवतं तुभ्यमहं सम्प्रददे । इति ॥ आदौतीर्थेऽस्थिप्रक्षेपः पश्चात्तीर्थ विधिरिति दिवोदासः । आदौ तीर्थविधिः पश्चात्तीर्थे दस्थिप्रक्षेपविधिरितिकेचित् । न्यायविदस्तु, अस्थि प्रक्षेपजन्य फलोद्देशेन गतेनादिवोदासमतोऽगीकार्यः । तीर्थफलोद्देशेन गतेनच द्वितीयोंऽगीकार्य इत्याहुः । दशाहाभ्यंतरेऽस्थिप्रक्षेपे संचयनोत्तरकालमेव प्रागुक्तवेष्टनैरावेष्ट्य ताम्रसंपुटादौ निक्षिप्य तीर्थंगत्वा तत्रस्नानादि विधिना पूर्वोक्तप्रकारेण प्रक्षिपेदिति विशेषः । अन्यकुलस्यास्थीनि। नीत्वा चांद्रयणं चरेत् । दययान्यस्यापि नयने महापुण्यं - इति अस्थ्युद्धारतीर्थ प्रक्षेपविधिः ॥

॥ द्वितीयदिनकृत्यं ॥

चरुश्रपणादि प्राग्वत् । देशकालौ संकीर्त्य- अपसव्यं अ०गोत्रस्य अ०प्रेतस्य प्रेतत्विमुक्तिद्वारा उत्तमलोक प्राप्त्यर्थं क्षुत्तृषानिरासार्थं चक्षुःश्रोत्रनासावयवनिष्पत्यर्थं द्वितीये हनि अवयवपूरकपिंडदानं करिष्ये । इति संकल्प्य । अ० गोत्र अ०प्रेत अद्यद्वितीयेऽहनि चक्षुःश्रोत्रनासावयवनिष्पत्यर्थं एषते पिंडउप० । द्वितीयेऽहनि एको द्वौवा त्रयो वांजलयस्तोयपात्राणिच । इति विशेषः । अन्यत्सर्वं प्रथमदिनवत् ॥

॥ तृतीयादिनकृत्यं ॥

देशकालौ संकीर्त्य- अपसव्यं अ॰गोत्रस्य अ॰प्रेतस्य प्रेतत्ववि॰ भुजवक्षःस्तनग्रीवावयवनिष्पत्यर्थं अवय॰ करिष्ये इति संकल्पः। अ॰गोत्र अ॰प्रेत अद्यतृतीयेऽहनि भुजवक्षःस्तनग्रीवावयवनिष्पत्यर्थं एषतो पिंड उप॰ इति पिंडदानं। तृतीयेहनि- एकः, त्रयः, पंचवा अंजलयस्तो-यपात्राणि। अमुकगोत्रस्य अ॰प्रेतस्य प्रेतत्वविमुक्त्यर्थं तृतीयेऽहनि नवश्राद्धं करिष्ये इति नवश्राद्धसंकल्पः। अ॰गोत्र अ॰प्रेत तृतीयेऽहनि नवश्राद्धे। इति विशेषः। अन्यत्सर्वं प्राग्वत् ॥

॥ चतुर्थदिनकृत्यं ॥

अ॰गोत्रस्य अ॰प्रेतस्य प्रेतत्व॰ निरासार्थं नाभि-गुदालिंगावयवनिष्पत्यर्थं चतुर्थेऽहनि अवय॰ करिष्ये इति संकल्पः। अ॰गोत्र प्रेत चतुर्थेऽहनि नाभिगुदालिंगावयव निष्पत्यर्थं मेषतेपिंड॰ इति पिंडदानं। चतुर्थेऽहनि, एकः चत्वारः, सप्तवा, अंजलयस्तोयपात्राणिच। अन्यत्सर्वं पूर्ववत् ॥

॥ पंचमादिनकृत्यं ॥

अमुकगोत्रस्य अ॰प्रेतस्य प्रेतत्व॰ निरासार्थं उरु-

द्वयजानुद्वयपादद्वयावयवानिष्पत्त्यर्थं पंचमेऽहनि अवय० कारिष्ये इति संकल्पः। अ०गोत्रअ०प्रेत पंचमेहनि ऊरुद्वयजानुद्वयपादद्वयावयवनिष्पत्त्यर्थं एषतेपिंडउ० इतिपिंडदानं। पंचमेहनि—एकः, पंच, नववा अंजलयस्तोयपात्राणिच। अथनवश्राद्धं- अ०गोत्रस्य अ०प्रेतस्य प्रेतत्व० पंचमेऽहनि विषमश्राद्धं- करिष्ये इति संकल्पः। अ०गोत्र अ०प्रेत पंचमेहनि विषमश्राद्धे। इतिविशेषः। शेषंप्रागवत्।

## ॥ षष्ठदिनकृत्यं ॥

अमुकगोत्रस्य अ०प्रेतस्यप्रेतत्व० सार्थं मर्मावयवनिष्पत्त्यर्थं षष्ठेऽहनि अवय० आहंकारिष्ये। इतिसंकल्पः - अ०गोत्र अ०प्रेत षष्ठेहनि मर्मावयवनिष्पत्यर्थं एषतेपिंडउ० ॥ इतिपिंडदानं। षष्ठेहनि- एकः षट् एकादशवा अंजलयस्तोयपात्राणिच। इतिविशेषः। अन्यत्सर्वं पूर्ववत् ॥

## ॥ सप्तमादिनकृत्यं ॥

अ०गोत्रस्य अप्रेतस्यप्रेतत्व— सार्थमज्जामेदोमांसशिराजालावयवनिष्पत्यर्थं सप्तमेऽहनि अवय० आहं कारिष्ये। इतिसंकल्पः। अ०गोत्र अ०प्रेत सप्तमेहनि मज्जामेदोमांसशिराजालावयवनिष्पत्यर्थं एष तेपिंडउ० इतिपिंडदानं।

सप्तमेऽहनि, एकः । सप्त । त्रयोदशवा अंजलयस्तोयपात्राणिच । अथनवश्राद्धं । अगोत्रस्य अ०प्रेतस्यप्रेत० सप्तमेऽहनि नव श्राद्ध करिष्ये इतिसंकल्पः । अ०गोत्र अ०प्रेत सप्तमेहनि विषमश्राद्धे । इतिविशेषः । अन्यत्सर्वंपूर्ववत् ।

॥ अष्टमदिनकृत्यं ॥

अ०गोत्रस्य अ०प्रेतस्य प्रेतत्व० सार्थं दंतलोमनखास्थ्यवयवनिष्पत्यर्थमष्टमेऽहनि अवयव चाहं करिष्ये इति संकल्पः ।अ०गोत्र अ०प्रेत अष्टमेहनि दंतनखलोमास्थ्यवयवनिष्पत्यर्थं एषतेपिंड उ० । इति पिंडदानं अष्टमेऽहनि एकः, अष्टौ,पंचदशवांजलयस्तोयपात्राणिच ।इतिविशेषः। अन्यत्सर्वं पुर्व० । नवमदिनकृत्यं- अ०गोत्रस्य अ०प्रेतस्य प्रेतत्व० सार्थं बलवीर्यावयवनिष्पत्यर्थंनवमेऽहनि अवय० चाहं करिष्ये इतिसंकल्पः । अ०गोत्र अ०प्रेत नवमेऽहनि बलवीर्यावयनिष्पत्यर्थं एषतेपिंडउ० इतिपिंडदानं ।

॥ नवमेऽहनि ॥

एकः, नव, सप्तदशवांजलयस्तोययात्राणिच ।अथ नवश्राद्ध । अ०गोत्रस्य अ०प्रेतस्य प्रेतत्व० नवमेऽहनि नव श्राद्धं करिष्ये इतिसंकल्पः अ०गोत्र अ०प्रेत नवमेऽहनिविषमश्राद्धे इतिविशेषः । अन्यत्सर्वंपूर्ववत् ।

॥ दशमादिनकृत्यं ॥

अमुक०गोत्रस्य अ०प्रेतस्य प्रेतत्व० सर्वावयवपूर्णत्वनिष्पत्यर्थं दशमेऽहनि अवयव० चांहकरिष्ये इति संकल्पः। अमु०गोत्र अ०प्रेत सर्वावयवपूर्णत्व निष्पत्यर्थं दशमेऽहनि एषतेपिंड उ० ॥ इति पिंडदानं। दशमेऽहनि एकः, दश, एकोनविंशतिर्वांजल यस्तोयपात्राणिच। अन्यत्सर्वं पूर्ववत् ॥

॥ दशाहबलयः ॥

देशकालौ संकीर्त्य अपसव्यं अ०गोत्रस्य अ०प्रेतस्य प्रेतत्ववि० लोकावाप्तर्थं दशाहबलिदानं करिष्ये। इति संकल्प पिंडत्रयं कृत्वा तानादाय किंचिद्दूरं नैर्ऋत्यां दिशिगत्वा त्रिकोणं स्थंडिलं कृत्वा तत्रोदकुंभत्रयं निधाय तदुपरि पिंडान्निधाय जलंक्षिपेत्। यथा- अ० गोत्रस्य अ० प्रेतस्य प्रेतत्व० प्त्यर्थं प्रेताय एषसोदकुंभोबलिरुपतिष्ठतां, अ०गोत्रस्य अ०प्रेतस्य प्रे०त्व०प्त्यर्थं यमाय एषसोदकुंभोबलिरुपातिष्ठतां। अ०गोत्रस्य अ०प्रेतस्य प्रेतत्व०प्त्यर्थं प्रेतसखिभ्यः एषसोदकुंभोबलिरुपातिष्ठंतां। इति। अनेन दशाहबलि दानेन प्रेतस्य प्रेतत्वनिवृत्तिरस्तु। उत्तमलोकावाप्तिरस्तु। अथ वायसबलिः। देशकालौ संकीर्त्य अपसव्यं अ०गोत्रस्य अ०प्रेतस्य प्रेतत्ववि०प्त्यर्थं दशाहे वायसबलि

दानं करिष्ये। इति संकल्प्य मृदात्रिकोणां वेदिकांकृत्वा तदुपरि उदकुंभंनिधाय तदुपरि पोलिकां तदुपरि पिंडानिधाय तत्रपताकां छत्रंपादुकांच निधाय अ०गोत्रस्य अ०प्रेतस्य प्रेतत्व०प्त्यर्थं एषते वायसबलिर्मयादत्तस्तवोपतिष्ठतां। काकोऽसियमदूतोऽसि गृहाणंबलिमुत्तमं। यमद्वारगते प्रेत तमाप्यायितुमर्हसि। इति पिंडोपरि जलंक्षिपेत्। अनादि निधनो० अतसी०। इमंबलिं वायसो यावद्भक्षयति तावत्तिष्ठेत्। ततः सर्वे सपिंडाः स्नात्वा प्राचीनावीतिनो दक्षिणामुखा अश्मोपरि- अ०गोत्रस्य अ०प्रेतस्य प्रेतत्वनिवृ०प्त्यर्थं दाहजनिततापोपशमनार्थं एष तिलतोयांजलि स्तवोपतिष्ठतां। ततोऽश्मानं तिलतैलेनाभ्यज्य जलेनिक्षिपेत्। तत्रमंत्रः—अस्मात्वमधिजातोऽसि त्वदयं जायतांपुनः। असौ स्वर्गाय लोकायस्वाहा इति। असौ स्थाने प्रेतनामोद्देशः। केचित्प्रेतत्व निवृत्या उत्तमलोकप्रप्त्यर्थं दशदानान्यप्यत्रकुर्वंति। ततः पुत्रादिनां यथाचारं वाससां त्यागः। केशश्मश्रुवपनंनखच्छेदादिश्च। ततः सर्वे सगोत्राः पुरंध्रयश्च यथादेशाचारं गौरसर्षपकल्केन तिलामलककल्केनवाभ्यक्ताः एककाले जले सशिरस्कं स्नात्वाऽऽचम्यवाग्यता वृषभं गां सुवर्णं च स्पृष्ट्वा शुक्लवाससो गृहं गच्छेयुः। त्र्यहा शौचपक्षे प्रथमेऽहनि त्रयोऽवयवापिंडास्त्रयोंजलयास्त्रिंशद्वा। द्वितयिदिने

प्रथमदिनवव तृतीयेऽहनि चत्वारोऽवयव पिंडः। चत्वारों-जलयश्चत्वारिंशद्धा। एकाहाशौचे, सद्यः शौचेच सर्वोऽ-वयव पिंडाः पक्षांतरेणांजलश्चयुगपदेवदातव्याः। इति-दशहान्तंक ॥

॥ एकादशाहे ॥

अथैकादशाकृत्यं प्रातरुत्थायगृहानुलेपनं कृत्वा स्पृष्टानां मृद्भांडानां त्यागः। सर्वेषां सपिंडानां सचैलं स्नानं। तत्रस्पृष्टवस्त्रादिनां प्रक्षालनं। कर्ता आचम्य प्राणानायम्य देशकालौ स्मृत्वा ममाशौचजन्याशुचित्वादि-सकल देषनिवृत्ति पूर्वक शरिरशुद्धिद्वारा वृषोत्सर्गाद्यधिकार सिद्धयर्थं पंचगव्यप्राशन महंकारिष्ये इति संकल्प्य आचा-रमार्तंडोक्त प्रकारेणपंचगव्यं संपाद्य तत्प्राशनं नूतनयजो-पवीतधारणंच कुर्यात। कतृभिन्नानामपियथाचारं पंचगव्या-शनं यज्ञोपवीतधारणंचनित्यं एवंपंचगव्याप्राशते नशरीरशुद्धिं संपाद्यवृषोत्सर्गाद्यग्रेतनं कर्मकुर्यात्। क्वचित्पंचक त्रिपाद-नक्षत्र त्रिपुष्करद्विपुष्करादिपुमरणसंभवे तच्छान्त्यर्थ सूतकांत एव स्नानोत्तरं प्रातवृषोत्सर्गमहैकोद्दिष्टश्राद्धात्प्रागेवशांतेः कर्तव्यं तास्मरणात्पूर्वमिह शांतिं कृत्वा। ततश्चवृषोत्स गार्दि कुर्यात् ॥

॥ पंचकत्रिपाद साधारण शांतिः ॥

सूतकांते तिलहोमं घृतदानं चकृत्वा कांस्यपात्रे तैलं प्रक्षिप्य तत्रात्मबिंबं वीक्ष्य विप्राय दद्यात् । शांतिश्चलक्ष-होमरुद्रजपान्यतररूपा यथाविभवं कार्या । अथवा कुंभे यमप्रतिमां संपूज्य स्वगृह्योक्तेनाविधि नाग्निं प्रतिष्ठाप्यान्वा-धानादिचरुश्रपणातं कृत्वा आज्यभागांते नामभिश्चतुर्दश-चर्वाहुतीः जुहुयात् । तत्रमंत्राः- यमायस्वाहा । धर्मराजाय० मृत्यवे० अंतकाय० वैवस्वताय० कालाय० सर्वभूतक्षयाय० औदुंबराय० दध्नाय० नीलाय० परमेष्ठिने० वृकोदराय० चित्राय० चित्रगुप्ताय० इति । हुत्वा होमशेषं समाप्यं कृष्णवस्त्रयुतां गां यमोमे प्रीयतामिति ब्राह्मणायदद्यात् । इति ॥

॥ पंचकशांतिः ॥

तीर्थेगत्वा स्नानं । शुद्धवस्त्रपरिधानं । देशकालौ स्मृत्वा । अपसव्यं । अ०गोत्रस्य अ०प्रेतस्य पंचकजनित दुर्मरणदोषोपशांत्यर्थं सव्यं ममगृहे सपरिवारस्यायुरारोग्य सुखश्रीप्राप्त्यर्थं श्री विष्णुपुजनपूर्वकं पंचकशांतिं करिष्ये । इति संकल्प्य विष्णुं संपूज्याचार्यवरणनं कुर्यात् । ततो वृताचार्यः कर्मसंकल्पादि प्रादेशकरणांते स्थंडिलं निर्माय तत्रपंचभूसंस्कारान् कृत्वा वरदनामानं अग्निं प्रतिष्ठाप्य

प्रज्वाल्य ध्यानादि वैकल्पिकावधारणांते तदीशीन्द्यां महीद्यौ रित्यादि विधिना मंत्रवृत्त्या पंचकलशान् प्रतिष्ठाप्य तदुपरि निहितपूर्णपात्रेषु कृताग्न्युत्तारण प्राणप्रतिष्ठाः सौवर्णीः पंच धनिष्ठादि नक्षत्रं पंचकदेवताः स्थापयेत् । यथा- मध्ये वसोः पवित्रमसि० वसुभ्योनमः वसूनावाहयामि । इति वसून् । पूर्व-वरुणस्तोत्तंभन० वरुणाय० वरुणमा० इति वरुणं । दक्षिणे- उतनोहिर्बुध्न्यः । अजैकपादाय० अजैक-पादमा० इत्यजैकपादं पश्चिमे शिवोभूत्वामह्य० अहिबु-ध्न्याय० अहिर्बुध्न्यामा० इत्यहिर्बुध्न्यं । उत्त पूषंतवव्रते-पूष्णे० पूषणमा० इति पूषणं । आवाह्य संपूज्य तत्पार्श्वेऽ क्षतपुंजोपरि- यमायनमः यममावाहयामि । १ । धर्मराजाय० धर्मराजमा० २ मृत्यवे० मृत्युमा० ३ अंत-काय० अंतकमा० ४ वैवस्वताय० वैवस्वतमा० ५ कालाय० कालमा० ६ सर्वभूतक्षयाय० सर्वभूतक्षयमा० ७ औदुंब-राय० औदुंबरमा० ८ दध्नाय० दध्नमा० ९ नीलाय० नीलमा० १० परमेष्ठिने० परमेष्ठिनमा० ११ वृकोदराय० वृकोदरमा० १२ चित्राय० चित्रमा० १३ चित्रगुप्ताय० चित्रगुप्तमा० १४ इति चतुर्दश देवतां आवाह्य संपूज्य पंचकलशेषु पंचसूक्तजपः कार्यः — प्रथमकालशे, कृणुष्व पाजः० ५ इति राक्षोघ्नं । द्वितीये, विभ्राट्बृहत्० १४ इति

सौरं । तृतीये, आशुः शिशानो० १७ इत्यप्रतिरथं । चतुर्थे, नमस्तेरुद्र० ६४ इति रौद्रं । पंचमे, ऋचं वाचंप्रपद्ये० २४ इति शांतिकं षडंगसहित रुद्राध्यायोवा । ततः स्थापित कलशानामुत्तरे- गृहमंडले ग्रहानावाह्य संपूज्य कलशप्रार्थ- नांतं कुर्यात् । ततः स्थंडिलान्तिकमेत्यान्वाधानं कुर्यात् । प्रजापतिं इंद्रं अग्निं सोमं एता आज्येन । अथ प्रधानं । आदित्यादि नवग्रह प्रधानदेवताः समित्तिलचर्वाज्यद्रव्यैः प्रत्येकं प्रतिद्रव्यं अष्टाष्टसंख्या काहुतिभिः । अधिदेवताः प्रत्यधिदेवताश्च पूर्वोक्तद्रव्यः प्रत्येकं प्रतिद्रव्यं द्वाभ्यां द्वाभ्या माहुतिभ्यां । विनायकादिक्रतुसाद्गुण्य देवता इंद्रादिलोक- पालदेवताश्च पूर्वोक्तद्रव्यैः प्रत्येकं प्रतिद्रव्य मेकैकया हुत्या । पुनरत्र प्रधानं । वस्वादिपंचकनक्षत्र देवताः समित्ति लाज्यद्रव्यैः प्रत्येकं प्रतिद्रव्यं अष्टोत्तरशताष्टविंशत्यन्यतर संख्याकाहुतिभिः । यमादि चतुर्दशदेवताः पूर्वोक्तद्रव्यैः प्रत्येकं प्रतिद्रव्यं अष्टाष्टसंख्या काहुतिभिः । अघोरं पूर्वोक्त द्रव्यैः प्रतिद्रव्यमेकैकयाहुत्या । अग्निं स्विष्टकृतं शेषेण । अग्निंवायुं सूर्यमित्यादि आज्यभागांते यजमानेन यक्ष्यमाण देवता उद्दिश्य हविषां त्यागे कृते सर्त्विक् यथान्वाधानं प्रधानहोमं आवाहनमंत्रेण समाप्य स्विष्टकृदाद्यंगहोमांते बलिदानं पूर्णाहुतिहोमंच कृत्वा प्रायश्चित्त होमादि होमशेषं

समाप्य स्थापितकलशोदकैरभिषिक्तो यजमानः स्नात्वा वासांसि परित्यज्याचार्यायदत्वा पंचकदेवता प्रीत्यर्थं पयस्विनीं गां, महिषीं, सप्तधान्यसहितं हिरण्यं, तिलसहितं कृष्णवस्त्रं, सहिरण्यं घृतंच दत्वा ऋत्विभ्भ्यो यथाशक्ति दक्षिणां दत्वा श्रेयः संपाद्य आचार्येणावाहिता देवताः संपूज्यतासुविसृष्टासुविभूतिं धृत्वाऽग्निं सम्पूज्यविसृज्य सोपस्करं प्रतिमादि आचार्याय दद्यात् । ततः कांस्यपात्रगते अज्ये– रूपेणवोरूपं० इति स्वप्रतिबिंबं विलोक्य तत्पात्रं सदक्षिणं विप्राय दत्वा भूयसीदानांते पंचामृतेन शिवमभिषिच्य मृत्युंजय ( त्र्यम्बकंयजा० ) मंत्रमष्टोत्तर शतवारं जपेत् । ततः– " अनेनपंचकशांतिकर्मणा ( अपसव्यं ) अ०गोत्रस्य अ०प्रेतस्य पंचकमरणसूचितसर्वदोषनिवृत्तिरस्तु ।" ( सव्यं ) ममगृहे सकलदुरितोपशांतिरस्तु " इतिकर्मसंपूर्णतां वाचयित्वा षड्ब्राह्मणभोजनं संकल्प्य यस्यस्मृत्या० इतिविष्णुस्मरणपूर्वकं कर्मेश्वरार्पणं कुर्यात् ।

: अथत्रिपादशांति :

सूतकांते तीर्थंगत्वा स्नानादिविधाय- देशकालौ स्मृत्वा- अपसव्यं अ०गोत्रस्य अ०प्रेतस्य त्रिपादर्क्षमरणसू-

चितवंशारिष्टशान्त्यर्थं त्रिपादर्क्षशांतिं करिष्ये । इतिसंकल्प्य विष्णुं षोडशोडशोपचारैः संपूज्याचार्यवरणंकुर्यात् । अथ वृताचार्यः कर्मसंकल्पादि प्रादेशकरणांते स्थंडिलेपंचभूसंस्कारपूर्वकमग्निवरदनाम्ना प्रतिष्ठाप्यप्रज्वालनादिवैकाल्पिकावधारणांते तदीशान्यां महीद्यौरित्यादिविधिनामंत्रावृत्त्या कलशत्रयं प्रतिष्ठाप्य तदुपरिनिहितेषुपूर्णपात्रेषु कृताग्न्युत्तारणप्राणप्रतिष्ठाः सौवर्णीः त्रिस्रस्त्रिपादर्क्षदेवताः स्थापयत् ॥ यथा– कृत्तिकायां मरणसंभवे, मध्यमकलशे- अग्निदूतं० अग्नयेनमोऽग्निमा० इत्यग्निं प्रधानदेवतां । दक्षिणे— यमायत्वा० यमायनमोयममा० इति यममाधिदेवतां । उत्तरे- प्रजापतेनत्व० प्रजापतये० प्रजापातिमा० इति प्रत्यधिदेवतांप्रजापतिं । आवाह्य संपूज्य शांतीः पठित्वा स्थापितदेवतानां पार्श्वेऽक्षतपुंजोपरि—· यमाय० यममा० १ धर्मराजमा० २ मृत्यवे० मृत्युमा० ३ अंतकाय अंतकमा० ४ वैवस्वताय० वैवस्वतमा० ५ कालाय० कालमा० ६ सर्वभूतक्षयाय० सर्वभूतक्षयमा० ७ औदुंबराय० औदुंबरमा० ८ दध्नाय० दध्नमा० ९ नीलाय० नीलमा० १० परमेष्ठिने० परमेष्ठिनमा० ११ चित्राय० चित्रमा० १२ चित्रगुप्ताय० चित्रगुप्तमा० १४ इति चतुर्दशवेताद आवाह्य संपूज्य तदुत्तरतो ग्रहान् आवाह्य संपूज्यकलशप्रार्थनां-

तं कृत्वाऽग्निसमीपमुपेत्यन्वाधानं कुर्यात् । प्रजापतिं इंद्रं अग्निं सोमं एता आज्येन । अथ प्रधानं, आदित्यादिनव-ग्रहप्रधानदेवताः समित्तिल चर्वाज्यद्रव्यैः प्रत्येकं प्रतिद्रव्यं अष्टाष्टाहुतिभिः । अधिदेवताः प्रत्याधिदेवताश्च पूर्वोक्तद्रव्यैः प्रत्येकं प्रतिद्रव्यं द्वाभ्याद्वाभ्यामाहुतिभ्यां विनायकादि क्रतुसाद्गुण्यदेवता इंद्रादिलोकपाल देवताश्च पूर्वोक्तद्रव्यैः प्रत्येकं प्रतिद्रव्यं एकैकयाहुत्या । पुनरत्र प्रधान । अग्निं प्रधानदेवतां समित्तिलचर्वाज्यद्रव्यैः प्रतिद्रव्यं अष्टोत्तरशता-ष्टविंशत्यन्यतरसंख्याकाहुतिभिः । यमं अधिदेवतां, प्रजा-पतिं प्रत्याधिदेवतांच पूर्वोक्तद्रव्यैः प्रत्येकं प्रतिद्रव्यं प्रधान दशांशसंख्याकाहुतिभिः । यमादिचतुर्दशदेवताः पूर्वोक्त द्रव्यैः प्रत्येकं प्रतिद्रव्यं अष्टाष्टसंख्याकाहुतिभिः । अघोरं पूर्वोक्तद्रव्यैः प्रतिद्रव्यमेकैकयाहुत्या ॥ शेषेणाग्निं स्विष्ट-कृतमित्यादि आज्यभागांते यजमानेन यक्ष्यमाणदेवता उद्दिश्य हविषां त्यागेकृते यथान्वाधानं आवाहनमंत्रेण प्रधानहोमं समाप्य स्विष्टकृदाद्यंगहोमांते बलिदानं पूर्णाहुतिं च कृत्वा प्रायश्चित्तहोमादि होमशेषं समाप्य स्थापित कलशोदकैरभिषिक्तो यजमानः स्नात्वा स्नानवासांस्याचा-र्याय दत्वा आचार्याय गां ऋत्विग्भ्यश्च यथाशक्ति दक्षिणां दत्वा तान् प्रतोष्य तेभ्यः श्रेयः संपाद्यावाहितदेवताः

संपूज्याग्निंच संपूज्य विभूतिं धृत्वा विसृष्टास्वाचार्येणा-वाहितदेवतास्वग्नौच प्रतिमादि सोपस्करमाचार्याय दत्वा कांस्यपात्रे आज्यमालोक्य सपात्रं सदाक्षिणं तदाज्यं विप्राय दत्वान्येभ्यश्च भूतर्सींदत्वा पंचामृतेन शिवमभिषिच्य त्र्यम्बकंय० इति मंत्रमष्टोत्तरशतवारं जप्त्वा अनेन त्रिपाद-क्षशांतिकर्मणा ( अपसव्यं ) अ०गोत्रस्य अ०प्रेतस्य त्रिपादक्षमरणसुचितदोषनिवृत्तिरस्तु । (सव्यं) सर्वदुरितोप-शांतिरस्तु । इति कर्मसंपूर्णतां वाचायित्वा शांतींश्च पाठ-यित्वा ब्राह्मणभोजनं संकल्प्य यस्यस्मृत्या० इति विष्णु स्मरणपूर्वकं कर्मेश्वरार्पणं कुर्यात् ॥

॥ त्रिपादनक्षत्रदेवतामंत्रादिनां सूची ॥

| नक्षत्रं | प्र०देवता | मंत्रः |
|---|---|---|
| कृत्तिका | अग्निः | अग्निं दूतं० |
| पुनर्वसुः | अदितिः | अदित्यैरास्नासि |
| उत्तरा | अर्यमा | अर्यमणंबृह |
| विशाखा | इंद्राग्नी | इंद्राग्नी आगतं |
| उ०आषाढा | विश्वेदेवा | विश्वेदेवासआ |
| पू०भाद्रपदा | अहिर्बुध्न्यः | शिवोभूत्वा |
| भरणी | यमः | यमायत्वा० |

| नक्षत्रं | प्र. अ० देवता | मंत्रः |
|---|---|---|
| आर्द्रा | रुद्रः | एषतेरुद्राः० |
| पूर्वा | भगः | प्रातर्जितंभग० |
| स्वाति | वायुः | तववायऋ० |
| पू० आषाढा | वरुणः | तत्वायामि० |
| शततारा | वरुणः | इमंमेवरु० |
| रोहिणी | प्रजापतिः | प्रजापतेनत्व० |
| पुष्य | बृहस्पतिः | बृहस्पते अति० |
| हस्तः | सूर्यः | उदुत्यजातवे० |
| अनुराधा | मित्रे | मित्रस्यचर्ष० |
| श्रवणं | विष्णुः | इदंविष्णुः० |
| उत्तराभाद्रपदा | अजैकपात् | उतनोहिर्बुध्न्यः० |

इति

॥ विष्णुतर्पणं ॥

तीर्थंगत्वा विधिवत्स्नानादिविधाय देशकालौ संकीर्त्य अपसव्यं अ० गोत्रस्य अ० प्रेतस्य प्रेतत्व० त्त्यर्थं अद्य एकादशाहे वृषोत्सर्गाद्यैर्ध्वदेहिककर्मयोग्यताप्राप्त्यर्थं सव्यं विष्णुपूजनपूर्वकं विष्णुतर्पणं करिष्ये। तत्राधिकार सम्पत्त्यर्थं असुकप्रत्याम्नायेन एकं प्रजापत्यमहमाचरिष्ये इति संकल्य

यथा संकल्पित प्रजापत्याचरणेन सम्पन्नाधिकारः प्राक् पुरुष सूक्तन्यासान् कृत्वा विष्णुं शोडशोपचारैः पूजयेत्। ततो विष्णुतर्पणं। ताम्रपात्रे, जलदुग्धसर्वौषध्यक्षतैर्मिश्रितैर्विष्णु मुद्दिश्य शंखेनतर्पयेत्॥ यथा- सहस्त्रशीर्षा० अपसव्यं अ० गोत्रस्य अ०प्रेतस्य प्रेतत्वमोक्षार्थं विष्णुं तर्पयामि॥ १॥ एवं सर्वत्र। सव्ये पुरुषएवेद१० अप० अ०गोत्रस्य अ० प्रेतस्य प्रेतत्वमोक्षार्थं विष्णुत०॥ २॥ सव्यं एतावानस्य० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत०॥ ३॥ सव्यं त्रिपादूर्ध्व० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत०॥ ४॥ सव्यं ततो विराळ० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत०॥ ५॥ सव्यं तस्माद्यज्ञात्सर्व० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत० ॥ ६॥ सव्यं तस्माद्यज्ञात्सर्वहुतऋचः० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत०॥ ७॥ सव्यं तस्मादश्वाअ० अप० अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व०॥ ८॥ सव्यं तंयज्ञं० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत०॥ ९॥ सव्यं यत्पुरुषं० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत०॥ १०॥ सव्यं ब्राह्मणोस्य० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत०॥ ११॥ सव्ये चंद्रमाम० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत० ॥ १२॥ सव्यं नाभ्यआसी० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत०॥ १३॥ सव्यं यत्पुरुषे० अप० अ०गोत्रस्य अ०

प्रेतस्य प्रेत० ॥ १४ ॥ सव्यं सप्तास्यासन्० अप० अ० गोत्रस्य अ०प्रेतस्य प्रेत० ॥ १५ ॥ सव्यं यज्ञेनयज्ञ० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत० ॥ १६ ॥ सव्यं युंजतेमन० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत० ॥ १७ ॥ सव्यं इदं-विष्णुः० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत० ॥ १८ ॥ सव्यं इरावती० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत० ॥ १९ ॥ सव्यं देवश्रुतौ० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत० ॥ २० ॥ सव्यं विष्णोर्नुक० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत० ॥ २१ ॥ सव्यं दिवोवावि० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत० ॥ २२ ॥ सव्यं प्रतद्विष्णुः० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत० ॥ २३ ॥ सव्यं विष्णोरराट० अप० अ०गोत्रस्य अ०-प्रेतस्य प्रेत० ॥ २४ ॥ सव्यं तद्विप्रासो० अप० अ०गोत्रस्य अ०प्रेतस्य प्रेत० ॥ २५ ॥ सव्यं अनादिनि० नतेषांविद्यते भयं । अनेन विष्णुतर्पणेन अप० अ०गोत्रस्य अ०प्रेतस्य प्रेतत्वनिवृत्तिरस्तु । सव्यं विष्णुलोकावाप्तिरस्तु अग्रेवृषो-त्सर्गादि कर्मयोग्यतावाप्तिरस्तु ॥ इति ॥

॥ अथ वृषोत्सर्गप्रयोगः ॥

देशकालौ स्मृत्वा अपसव्यं अ०गोत्रस्य अ०प्रेतस प्रेतत्वनिवृत्तिद्वारोत्तमलोकावाप्तये वृषोत्सर्गं करिष्ये इति संकल्प्य— स्थंडिले मंचभूसंस्कारान् कृत्वा अध्वरनामान-

मग्निं प्रतिष्ठाप्य ध्यानादि कुर्यात् । ततोऽग्नेरीशान्यां मही-द्यौरित्यादि विधिना मंत्रावृत्यामध्ये एकं तत्परितोष्टौ इति नवकलशान् प्रतिष्ठाप्य पर्णपात्रनिधानांते इमे कलशाः सुप्रतिष्ठिता वरदाभवन्तु इति पठित्वा रुद्रादि मूर्तीनां अग्न्युत्तारणं प्राणप्रतिष्ठांच कृत्वा मध्यकलशोपरि- नमस्ते रुद्रं रुद्रायनमोऽमुमा वाहयामिनिताम्रमयीं रुद्रप्रतिमां प्रति ष्ठाप्य संपूज्य कलशानां दक्षिणतो रक्तवस्त्रोपरि प्रतिमासु-काल्यैनमः कालीमावाहयामि० १ कराल्यै० करालीमा० २ विकटायै० विकटामा० ३ भीषणायै० भीषणामा० ४ महो-त्कटायै० महोत्कटामा० ५ संहारिण्यै० संहारिणीं० ६ दुराधर्षायै० दुरादर्षामा० इति सप्तप्रतमातृआवाह्य—प्रेताज-यतान० इति मंत्रेण पूजयेत् । अनया पूजया प्रेतमातरः प्रीयताम् । ततोऽग्न्यंन्तिकमुपेत्यान्वाधानं कुर्यात् । यथा-अग्निंषडवारं आज्याहुत्या । प्रजापतिं इंद्रं अग्निं सोमं एता आज्यहुत्या । अग्निं रुद्रं शर्वं पशुपतिं उग्रं अशनिं भवं महादेवं ईशानंच पायसचरुणाप्रत्येकमेकैकयाहुत्या । पूषाणं पिष्टमयचरुणा एकाहुत्या । शेषणाग्निंऽस्विष्टकृति-मित्यादि । ब्रह्मोपदेशानांते प्रणितापात्रमध्ये पिष्टादिनाव्य-वधानंकृत्वा मूलदेशेपयः इतस्त्रजलं प्राक्षिप्य प्रणयनं अग्ने रुत्तरतोनिधानं परिस्तरणं । पात्रासदनांयथा— पवित्रछेद-

नानि, पवित्रेद्वे, प्रोक्षणीपात्रं, आज्यस्थाली, संमार्जनकुशाः. उपयमनकुशाः, तिस्रःसमिधः । स्रुवः, आज्यं, तंडुलाः, सिद्धः पैाष्णः पिष्टमयश्चरुः, पूर्णपात्रं, चरुस्थाली, मेक्षणं इति । पवित्रकरणं । प्रोक्षणी संस्कारः । यथासादित पात्राणां प्रोक्षणं । असंचरे प्रोक्षणींनां निधानं । आज्यस्थाल्यामाज्यानिर्वापः । चरुस्थान्यां प्रणीतोदकंपय आसिच्य सपवित्रायां तंडुलावापः । ब्रह्मण आज्याधिश्रयणं । स्वयमेव चरोराधिश्रयणं । उभयोः पर्यग्नींकरणं । स्रुवप्रतपनं । समृज्यपुनः प्रतपनं । प्रणीतोदकेनाभ्युक्ष्यनिधानं । आज्योद्वासनं । चरोरुद्वासनं । उत्पूयावेक्षणं । प्रोक्षण्युत्पवनं । उपयमनकुशादानं । समिधोऽभ्यादानं । सपवित्रकेन प्रोक्षण्युदकेन पर्युक्षणं । ततो होमः । ॐ इहरतिः स्वाहा इदमग्नयेनमम १ ॐ इहरमध्व॰स्वाहा । इदमग्नये॰ २ ॐ इहधृतिःस्वाहा इदमग्नये॰ ३ ॐ इहस्वधृतिःस्वाहा हद इदमग्नये॰ ४ ॐ उपसृजं धरुणंमात्रे धरुणोमातरं धयन् स्वाहा इदमग्नये॰ ५ ॐ रायष्पोषमस्मासुदीधरत्स्वाहा इद इदमग्नये॰ ६ ॐ प्रजापतयेस्वाया इदं प्रजापतये॰ ॐ इंद्रायस्वाहा इदामिंद्राय॰ ॐ अग्नयेस्वाहा इदमग्नये॰ ॐ सोमायस्वाहा इद॰सोमाय॰ । ततः पायसचरुमाभिघार्य ॐ अग्नयेस्वाहा इदमग्नये॰ १ ॐ रुद्रायस्वाहा इदं

रुद्राय० २ ॐ शर्वायस्वाहा इदंशर्वाय० ३ ॐ पशु-पतयेस्वाहा इदंपशुपतये ४ ॐ उग्रायस्वाहा इदमुग्राय० ५ ॐ अशनयेस्वाहा इदमशनये० ६ ॐ भवायस्वाहा इदं भवाय० ७ ॐ महादेवायस्वाहा इदंमहादेवाय० ८ ॐ ईशानायस्वाहा इदमीशानाय० ९ ॥ ततः पिष्टमय चरु-मभिधार्य स्त्रुवेणहोमः ॐ पूषागाअन्वेतुनः पूषारक्षत्वर्वतः। पूषावाजान् सनोतुनःस्वाया इदं पूष्णेनमम । ततः पायस-पौष्णाभ्यां स्विष्टकृत् ॐ अग्नये स्विष्टकृतेस्वाहा० इद-मग्नयेस्विष्टकृत० । ततः प्रणीताविमोकांतं प्रकृतिवत् । ततो रुद्रकलशे रुद्रप्रातिमांस्पृष्ट्वा नमस्तेरुद्रेतिरुद्राध्यायं पुरुष सूक्तं यद्देवादेवेति मंत्रत्रयंच० नमस्ते रुद्रेति षोडशर्चमेववा पठेत् । ततो यथोक्तंवृषभं वत्सतरीसहितं वस्त्रामाल्यघंटि काकिंकिणिकाहेमादिभिरलंकृत्य प्रादाक्षिण्येनाग्नेरुत्तरतो-नीत्वा प्राङ्मुखमवस्थाप्य स्वयमुदङ्मुख उपविश्य देश-कालौ संकीर्त्य— अपसव्यं अ०गोत्रस्य अ०प्रेतस्य प्रेत-त्वनि० उत्तमलोकावाप्त्यर्थमद्य एकादशेऽहनि करिष्यमाण वृषोत्संर्गांगभूतं वृषवत्सतरीपूजनं करिष्ये इति संकल्प्य सव्यं आदौवृषवत्सतरीणां देहेमंत्रदेवतान्यासः कार्यः। यथा— ॐ इषेत्वोर्जेत्वा० इति वृषमूर्ध्नि १ ॐ असं-ख्याता० इति ललाटे २ ॐ नमस्तेरुद्र० इति चक्रांके ३

ॐ सहस्राणिस० इति लांगूले ४ ॐ विभ्राट्‌वृ० त्र्यंबकं० य० इति नेत्रयोः ५ ॐ मानस्तोके० इति नासिकायां ६ ॐ अवतत्य० इति मुखे ७ ॐ नीलग्रीवा० इति ग्रीवांकंठे ८ ॐ मर्माणित० इति बाह्वोः ९ ॐ समिधाग्निं० इति बाहुमध्यतः १० ॐ नमोवःकिरिकेभ्यो० इति ह्रदये ११ ॐ हिरण्यगर्भः० इति नाभौ १२ ॐ मीढूहुष्टम० इति कट्यां १३ ॐ मानोमहान्त० इत्यूर्वोः १४ ॐ उदुत्तमं० इति जंघयोः १५ ॐ इमारुद्राय० इति जान्वोः १६ ॐ रक्षोहणं० इति गुदे १७ ॐ यथेमांवाचं० इति लांगूले १८ ॐ पंचनद्यः० इति प्रष्ठे १९ ॐ कृणुष्वपाजः० इति पंचपुच्छे २० ॐ युंजतेमन० इत्यनुवाकः २१ ॐ इदं विष्णुः० २९ ॐ इरावती० २३ ॐ देवश्रुता० ५४ ॐ विष्णोर्नुकं० २५ ॐ दिवोवा० २६ ॐ प्रातद्विष्णुः० २७ ॐ विष्णोरराट० २८ ॐ तद्विप्रासो० २९ इति सर्वांगेषु। एवं न्यासविधिंकृत्वा रुद्ररूपोभवेद्विसः। गंगाद्याः सरितः सर्वास्तस्यपुच्छेवसंतिहि। इति वृषशरीरे न्यासः। अथ वत्सतरीणां शरीरे— ॐ गौर्यैनमः शिरसि। पार्वत्यै ललाटे। गंगायै० नेत्रयोः। कालिंद्यै० नासिकायां। महादेव्यै० मुखे। लक्ष्मै० कंठे। गायत्र्यै० ह्रदये। सावित्र्यै० बाहुमध्ये। प्रज्ञायै० नाभौ। स्वाहानमः स्तनेषु। सर-

स्वस्त्यै० ऊर्वोः । भवान्यैनमः पादयोः । विश्वधारिण्यै० खुरेषु । मङ्गलायै० खुराग्रेषु । उमायै० पुच्छे । धृत्यै० शृंगयोः । रुद्राण्यै० शृंगांतरे । कोटयैं० पृष्टे । शूलवाहिन्यै० सर्वाङ्गेषु । इति । ततो वृषस्य वामे कुंकुमेन चक्रचिन्हं ॐ इदं विष्णुः० इति । दक्षिणे त्रिशूलचिह्नं ॐ इमारुद्राय इति । कृत्वा तप्तायसेनांकयेत् । ततो वृषस्य पुरुष सूक्तं श्रावयित्वा वृषवत्सतरीणां षोडशोपचारः पूजांकृत्वा वस्त्रालंकारादि दद्यात् । ततश्चतुर्भिः कलशैर्वृषस्यस्नपनं । तत्रमंत्रः । ॐ आपोहिष्ठाः० ३ ॐ शन्नोदेवी० १ ॐ समुद्रादूर्मिः० १ इति । ततश्चतुर्भिः वत्सतरीणां स्नपनं । तत्रमंत्रः । यत्तेकेशेषु दौर्भाग्यं सींमंतयश्चमूर्धनि । ललाटे कर्णयोरक्ष्णोरापसाद्घ्नंतु सर्वदा । भगंते वरुणोराजा भगंसूर्यो बृहस्पतिः । भगमिंद्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ इत्यभिषिच्यवृषं प्रार्थयेत् । धर्मस्त्वं वृषरूपेण जगदानंद कारक । अष्टमूर्तेरधिष्ठानमतः पाहि सनातन इति । ततो वत्सरीणां प्रार्थना । गावोममाग्रतः संतु गावोमे संतुपृष्ठतः । गावोमे हृदयेसंतु गवांमध्ये वसाम्यहं । पंचगावः समुत्पन्ना मथ्यमाने महोदधौ । तासांमध्ये तुयानंदा तस्यै धेन्वै नमोनमः । यालक्ष्मीः सर्वदेवानां याचदेवेष्यवस्थिता धेनुरूपेण सादेवी पितुः पापंव्यपोहतु । ततः पुष्पांजलिं गृहीत्वा

वृषभंदक्षिणीकृत्य नमेत् । अयं हिवोमयादत्तः सर्वासां पतिरुत्तमः । तुभ्यंचेतामयादत्ताः पत्न्यश्च सुमनोरमाः । एकवत्सतरी पक्षेतु— अयंहिते मयादत्तस्तरुण: पतिरुत्तमः । तुभ्यंचेयं मयादत्ता पत्नीच सुमनोरमा । ततोऽग्नेस्त्रिप्रदक्षिणं कारयित्वा तत्पुच्छे तर्पणं कुर्यात् । यथा— कुशयवजलान्यादाय देशकालौ संकीर्त्य— अपसव्यं- अ०गोत्रस्य अ०प्रेतस्य प्रेतत्व० प्त्यर्थं करिष्यमाण वृषोत्सर्गांगभूतं वृषवत्सतरी पुच्छेतर्पणं करिष्ये इति संकल्प्य- सव्यं ॐ सहस्र शीर्षा० अ०गोत्रं अ०प्रेतं वृषवत्सतरीपुच्छे तर्पयामि ॥ १ ॥ एवंसर्वत्र । सव्यं । ॐ पुरुषएवेद० अपसव्यं अ०गोत्रं अ०प्रेतं० पुच्छेतर्पयामि ॥ २ ॥ सव्यं ॐ एतावान० अप० अ०गोत्रं अ०प्रेतं० वृषं ॥ ३ ॥ सव्यं ॐ त्रिपादूर्ध्व० अप० अ०गोत्रं अ०प्रेतं० वृष० ॥ ४ ॥ सव्यं ॐ ततोविराळ० अप० अ०गोत्रं अ०प्रेतं वृषं० ॥ ५ ॥ सव्यं ॐ तस्माद्यज्ञात्सर्वहुतःसं० अप० अ०गोत्रं अ०प्रेतं वृष० ॥ ६ ॥ सव्यं ॐ तस्माद्यज्ञात्सर्वहुतऋ० अप० अ०गोत्रं अ०प्रेतं वृष० ॥ ७ ॥ सव्यं ॐ तस्मादश्वा० अप० अ०गोत्रं अ०प्रेतं वृष० ॥ ८ ॥ सव्यं ॐ तंयज्ञं० अप० अ०गोत्रं अ०प्रेतं वृष० ॥ ९ ॥ सव्यं ॐ यत्पुरुष० अप० अ०गोत्रं अ०प्रेतं वृष० ॥ १० ॥ सव्यं ॐ

ब्राह्मणो० अप० अ०गोत्रं अ०प्रेतं वृष० ॥ ११ ॥ सव्यं ॐ चंद्रमा० अप० अ०गोत्रं अ०प्रेतं० वृष० ॥ १२ ॥ सव्यं ॐ नाभ्या अप० अ०गोत्रं अ०प्रेतं वृष० ॥ १३ ॥ सव्यं ॐ यत्पुरुषेण० अप० अ०गोत्रं अ०प्रेतं वृष० ॥ १४ ॥ सव्यं ॐ सप्तास्या० अप० अ०गोत्रं अ०प्रेतं वृष० ॥ १५ ॥ सव्यं ॐ यज्ञेनयज्ञ० अप० अ०गोत्रं अ०प्रेतं वृष० ॥ १६ ॥ सव्यं ॐ मनोमे तर्पयत० अप० अ०गोत्रं अ०प्रेतं वृषवत्सतरीपुच्छेत० ॥ १७ ॥ अपउपस्पृश्य ॥ सव्यं उदङ्मुखउपविश्य— देशकालौ संकीर्त्य- वामहस्तेन वृषपुच्छमादाय एनं व्रषभं रुद्रदैवतं यथाशक्त्यालंकृतं गंधादिभिश्चार्चितं त्रिशुलंचक्रांकितं चतुर्वत्सतरीयुतं ( एकवत्सतरीयुतंवा ) अपसव्यं अ०गोत्रस्य अ० प्रेतस्य प्रेतत्वविमुक्तिद्वारोत्तमलोकावाप्त्यर्थं उत्स्रक्ष्ये ॐ एतंयुवानं पतिंवोददामि तेनक्रीडंतीश्चरथ- प्रियेण । मानःसाप्तजनुषा सुभगारायस्पोषेणसमिषामदेम । इति मंत्रेणोत्सृजेत् । वृषपुच्छ सहितं हिरण्यकुश- तिलजलं गृहीत्वा अ०गोत्राय अ०प्रेताय एष मया- दत्तस्तं तारयतु इत्युक्त्वा भूमौजलं क्षिपेत् । सव्यं । ततो वत्सतरीमध्यगतं वृषभं वक्ष्यमाणमंत्रैरभिमंत्रयेत् ॥ तेच- मंत्राः— समुद्रोऽसि० भूरभिमावाहिस्वाहा ॥ १ ॥ यास्ते

अग्नेसूर्यो० नस्कृधि ॥ २ ॥ यावोदेवाःसूर्यो० धत्तबृहस्पते ॥ ३ ॥ स्त्वनो० रुचारुचं ॥ ४ ॥ तत्वायामि० प्रमोषीः ॥ ५ ॥ स्वर्णवर्मः० स्वर्णसूर्यःस्वाहा ॥ इति ॥ ततो वृषं-वत्सतरीयुतं प्रदक्षिणीकृत्य । मुक्तस्त्वंभो मयावत्स गच्छत्वं यत्ररोचते । चरारण्यसहस्रेषु कुरुक्रीडांच गोकुले । धर्मस्त्वं वृषरूपेण ब्रह्मणानिर्मितःपुरा । तवोत्सर्गप्रभावेण प्रेतोद्धारो भवार्णवात् । तृणं भक्षजलंपिबयथेष्टं पर्यट इति व्रषस्य ईशान्यां प्राच्यांवा संकर्षनप्रेरणं । ततः परिस्तरण विसर्ज-नादि अग्नि विसर्जनांतं कृत्वा स्थापितदेवताः संपूज्य विसृज्यसहिरण्यं रुद्रकुंभ प्रतिमादि पयस्विनींगां सुवर्णवृत संयुक्तं कास्यपात्रं ब्राह्मणायदेयं । वृषोत्सर्गसांगतार्थं यथा-शक्तिब्राह्मणभोजनसंकल्पः । कर्मसम्पूर्णतां वाचयित्वा । अनेन वृषोत्सर्गेण अप० अ०गोत्रस्य अ०प्रेतस्य प्रेतत्व निवृत्तिरस्तु । एकादशाहे आशौचांतरेऽपिवृषोत्सर्गः कार्य एव । ( एकादशाहादिश्राद्धेष्वाधिकारसंपदस्तु ) ॥ इति वृषोत्सर्गः ।

## ॥ महैकोद्दिष्टश्राद्धं ॥

आचमनं । प्राणायामः । कुशोपग्रहः । बद्धाशिखः । दक्षिणाभिमुखं उपाविश्य । कुशोसि० इति कुशबटुंबध्वा । इमंलोकं० इति आत्मसंमुखं स्थापयेत् । ततः कुशबटोरुपरि

तिलानादाय अ०गोत्र अ०प्रेत अयंते क्षणं उपतिष्ठतां इति क्षिपेत् । एवं सर्वत्र । अ०गोत्र अ०प्रेत इदंते पाद्यमुपति० । अ०गोत्र प्रेत अयंते गंधउ० । अ०गोत्र अ०प्रेत इदंते पुष्पमुप० । अ०गोत्र अ०प्रेत इदंते आचमनमुप० । सव्यं । उपग्रहकुशत्यागः । स्वपादप्रक्षालनं । आचमनं । पुनः कुशोपग्रहः । प्राणायामः । अपसव्यं । तूष्णीं दिग्बंधः । सव्यं । कर्मार्थजलाभिमंत्रेण । यद्देवा० ३ अपसव्यं । पाकप्रोक्षणं । दुष्टदृष्ट्यादिनिपातदूषितः पाकः पूतोभवतु । सव्यंदेशकालसंपदस्तु । देशकालौ संकीर्त्य— अपसव्यं अ०गोत्रस्य अ०प्रेतस्य प्रेतत्वविमुक्तिद्वारोत्तमलोकावासये अद्य एकादशेऽहनि महैकोद्दिष्टश्राद्धं करिष्ये इति संकल्प्यासनदानं । अ०गोत्र प्रेत इदंते आसनमुपतिष्ठतां । आवाहनाभावः । अर्घपात्रपूरणं । एकस्मिन्नर्घपात्रे एकं पवित्रं निधाय तस्मिन् शंनोदेवीः० इत्यप आसिच्य । तिलोऽसि-सोम० । इति तूष्णीं वातिलान् प्रक्षिप्य तूष्णीं गंधपुष्प प्रक्षेपः । पवित्रं प्रेतकरेनिधाय अर्घंगृहीत्वा । यादिव्य आपः० अ०गोत्र अ०प्रेत एषतेऽर्घउपतिष्ठतां नसंस्रवसमवलयनं । नपात्रन्युब्जीकरणं । अर्घपात्रस्य गंधाउपतिष्ठंतां । पुष्पमुप० । धूपउप० । दीपउपति० । आच्छादनमुप० । ततः कुशबटोः असु०गोत्र अ०प्रेत इमेते गंधाउपति० । अ०

गोत्र अ०प्रेत इमानिप्रेत पुष्पाणिउप०। अ०गोत्र अ०प्रेत एषते धूपउपतिष्ठतां। अ०गोत्र अ०प्रेत एषते दीपउपाति०। अ०गोत्र अ०प्रेत इदंत आच्छादनमुप०। अर्चनाविधेःपरिपूर्णताऽस्तु। प्रत्युपचारं अपांदानं। सव्यं आचमनं। त्रिकोणं मंडलं कृत्वा। तदुपरिपात्रनिधानं। अपसव्यं अभिघार्य घृताक्तमन्नमृद्धृत्य तस्यपात्रे परिवेषणं। नाभौकरणं। नपात्रालंभावगाहौ। ऋतंत्वासंत्येनाभिषिंचामि। तिलविकिरणं। अपोदत्वा अ०गोत्र अ०प्रेत सोपस्करमिदंतेन्नमुपतिष्ठतां। आपोऽशनदानं। सव्यं। गायत्रीं जपित्वा। अपसव्यं। स्वदितामितितृप्तिप्रश्नः। सुस्वादितमिति प्रतिवचनं। अ०गोत्र अ०प्रेत इदंतेऽवनजेनमुपातिष्ठतां अ०गोत्र अ०प्रेत पिंडस्याधोदर्भासनं इदं तवोपतिष्ठतां। अ०गोत्र अ०प्रेत अद्य एकादशेहनि महैकोद्दिष्टश्राद्धे अयं पिंडस्तवोपाति०। अ०गोत्र अ०प्रेत प्रत्यवनेजनं तवोप० हस्तप्रक्षालनं। तूष्णीं सूत्रदानं। अ०गोत्र अ०प्रेत इमेते गंधाउपतिष्ठंतां। अ०गोत्र अ०प्रेत इदंते पुष्पमु०। अ०गोत्र अ०प्रेत अयंते धूपः उपतिष्ठतां। अ०गोत्र अ०प्रेत अयंते दीपउप०। अ०गोत्र अ०प्रेत इदंते नैवेद्यमुप०। अ०गोत्र अ०प्रेत इदंते फलंमुप०। अ०गोत्र अ०प्रेत इदंते तांबूलमु०। अ०गोत्र अ०प्रेत इयंते दक्षिणोप०। अ०गोत्रस्य अ०प्रेतस्य पिंडार्चनविधेः परि-

पूर्णतास्तु । अनेन पिंडदानेन अ०गो०त्रस्य अ०प्रेतस्य प्रेतत्व निवृत्तिरस्तु । सव्यं । आचमन । उपग्रहकुशत्यागः । पुनः कुशोपग्रहः । अप० ननः कुशवटौ जलपुष्पाक्षतान् तूष्णीमे-वार्पयित्वाऽक्षय्योदकं दद्यात् । अ०गोत्रस्य अ०प्रेतस्य दत्तमन्नादि उपातिष्ठताम् । ततः पवित्रं तूष्णीं पिंडोपरि नि-धाय पिंडोपरि तिलोदकेन सदुग्धेनधारां कुर्यात् । अ० गोत्रस्य अ०प्रेतस्य एषा सदुग्धाजलधारोपति० । अ०गोत्रस्य अ०प्रेतस्य महैकोद्दिष्टश्राद्धप्रतिष्ठासिध्यर्थमेषारजतदाक्षिणा अ०गोत्र अ०प्रेत तवोप० ॥ अत्रावसरे अन्यान्यपि छत्रो-पानत्प्रमुखानिदानानि कार्याणि । तद्विधिश्चाग्रेवक्ष्यते । अभिरम्यतां इति कुशबटुविसर्जनं । अभिरताः स्म इति प्रतिवचनं । अनादिनि० । अतसीपु० ॥ अनेन पिंडदानेन अ०गोत्रस्य अ०प्रेतस्य महैकोद्दिष्टश्राद्धे पिंडदानेन प्रेतत्व-निवृत्तिरस्तु । अग्रेतनकर्मण्याधिकारसंपदस्तु ॥ ततः पिंडंप्रवाह्यस्नायात् । ततः एवमेवान्यं विषमश्राद्धं ततः आद्यमासिकश्राद्धं च कुर्यात् । संकल्पादौ महैकोद्दिष्टपद स्थाने– विषमश्राद्धे विषमश्राद्धपदस्य , आद्यमासिकेचाद्य मासिकपदस्योहः कर्तव्यः । तंत्रेणानुष्ठानेतु महैकोद्दिष्टेनैवै-तत्सिद्धिः । द्वादशाहसपिंडीकरणपक्षेतदधिकारार्थमेकाद-शेहनि अपकृष्यकरिष्यमाणानां आद्यमासिकसहितानामेव

षोडशानां मासिकानां तंत्रतास्मरणाद्भवाद्यमासिकस्य पृथग नुष्ठानं ॥

॥ अथ दानानि ॥

देशकालौ संकीर्त्य अप० अ०गोत्रस्य प्रेतस्य प्रेतत्व-निवृत्तिद्वारा लोकांतरे तत्तद्दानकल्पोक्तफलावाप्तये छत्रोपान त्प्रमुखानिदानानि तत्तन्नामगोत्रेभ्यो ब्राह्मणेभ्यः करिष्ये इति संकल्प्य प्रतिदानं प्राक् प्रतिग्रहीतृविप्रं ततोदानद्रव्यं च संपूज्य दद्यात् । छत्रदानं— अ०गोत्रस्य अ०प्रेतस्य परलोके आतपनिवारणार्थं अमुकसगोत्रायामुकशर्मणे ब्राह्मणायमद्दत्तं छत्रं सदाक्षिणाकं अ०गोत्र अ०प्रेत तवोपतिष्ठतां । एवं सर्वत्रं ॥ १ ॥ उपानद्दानं-- अ०गोत्रस्य अ०प्रेतस्य लोकांतरे सीततप्तवालुकाकरकादिनिवारणार्थं अ०गोत्राय अ०शर्मणे ब्राह्मणाय मद्दत्तमुत्तानांगिरोदैवतं सदाक्षिणं अ० गोत्र० ॥ २ ॥ कमंडलुदानं- बहुधर्मसमाकीर्णे निर्वाते तोय वर्जिते । कमंडलुप्रदानेन सुखीभव सुनिश्चितं । अ०गोत्रस्य अ०प्रेतस्य परलोके तृषानिवृत्त्यर्थं अमुकस० ब्राह्मणाय म-द्दत्तोवरुणदैवतः सदाक्षिणःसजलःकमंडलुः अ०गोत्र०॥ ३ ॥ यज्ञोपवीतदानं-- अ०गोत्रस्य अ०प्रेतस्य लोकान्तरे प्रेतत्व-नि० त्त्यर्थं अमुकगो० ब्राह्मणाय मद्दत्तं प्रजापतिदैवतं सहि रण्यं यज्ञोपवीतद्वयं अ०गोत्र अ०प्रे० ॥ ४ ॥ पददानं ॥

आसनोपानहौ छत्रं मुद्रिकाच कमंडलुः । यज्ञोपवीताज्य-वस्त्रं भोजनंचान्नभाजनं । दशकंपदमेतस्यात्पदान्येवे त्रयो-दश ॥ देयानिवा यथाशक्ति तेनासौ प्रीणितो भवेत् ॥ अ० गोत्रस्य अ० प्रेतस्य लोकांतरे मार्गकष्टपरिहारपूर्वकमुत्तम-लोकावाप्तये तृप्त्यर्थं पददानं क० ॥ त्रिलोकीनाथदेवेश सर्वभूत कृपानिधे। पददानेन तुष्यस्व प्रयच्छास्यहिवांछितं। संकल्पवाक्यांते इदं यथाशक्ति आसनादिदशोपकरण-समूहात्मकं पदं तृतीयांशदक्षिणायुतं अ०गोत्र अ०प्रेत अ०प्रेद तवो० ॥ ५ ॥ शय्यादानं । अ०गोत्रस्य अ०प्रेतस्य लोकांतरे अशून्यशयनप्राप्तिद्वारा सुखशयनार्थं अ०गोत्राय ब्राह्मणाय मद्दत्ता सर्वोपस्कारयुता विश्वकर्मदेवता सदक्षिणा शय्या अ०गोत्र अ०प्रेत० ॥ ६ ॥ प्रेतसंबंधिवस्त्राभरणादि दानं-- अमुकगोत्रस्य अ०प्रेतस्य लोकान्तरे सुखसम्पत्त्यर्थं अ०गोत्राय अ०श० ब्राह्मणाय मद्दत्तानि प्रेतसंबंधिवस्त्रा भरणादीनि अ०गोत्र अ०प्रेत० ॥ ७ ॥ ततः- शक्तौ— गृहं, दासी, आयुधानि,अश्वं,रथं,गजं,महीषीं,भुवं, तिलान् , हिरण्यं, तांबूलं च दद्यात् ॥ तत्रवाक्यानि- इदंगृहं सर्वोप स्करसंयुतं अ०गोत्र अ०प्रेत तवो० । इयं दासी अ०गोत्र अ०प्रेत तवो । एतानि आयुधानि सकलोपस्कारसंयुतानि अ०गोत्र अ०प्रेत तवो० ॥ अयमश्वः सर्वोपस्कारसंयुतः

अ०गोत्र अ०प्रेत तवो० ॥ अयंरथः सर्वोपस्कारसंयुतः० । अयंगजः सर्वोपस्कारसंयुतः । इयं माहिषी सर्वोपस्कार-संयुता० ॥ इयं भूः० । इमे तिलाः० उपातिष्ठतां० । इदं हिरण्यं० उपतिष्ठतां । इदं तांबूलं० ॥ अथोपदानानि ॥ अन्नंचैवोदकुंभंचौपानहौ च कमंडलुः । छत्रं वस्त्रं तथा यष्टिं लोहदण्डं चदापयेत् । आग्निष्टिकां प्रदीपंच तिलास्तां-बूलमेवच । चंन्दनं पुष्पमालां चोपदानानि चतुर्दश ॥ देशकालौ संकीर्त्य- अमुक गोत्रस्य अ०प्रेतस्य परलोके तत्त-द्दानकल्पोक्तफलावाप्तये चतुर्दशोपदानानि क० ॥ प्रति-द्रव्यदानं विप्रपूजा द्रव्यपूजा च ॥ अन्नमेव यतो लक्ष्मीरन्न-मेव जनार्दनः । अन्नंब्रह्माखिलत्राणमस्तुजन्मनिजन्मनि । उदकुंभदानं । वारिपूर्णो घटश्चायं देवत्रयमयो यतः । प्रीयतां धर्मराजस्तु दानेनानेन पुण्यदः ॥ उपानद्दानं। उपा-नहौप्रदास्यामि कंटकादिनिवारणे । सर्वमार्गेषु सुखदे अतः शांतिंप्रयच्छये । कमंडलुः- त्रिलोकीनाथ देवेश सर्वभूत कृपा-निधे । उदपात्रेण संतुष्टः प्रयच्छास्याहिवांछितं ॥ छत्रं-इहामु-त्रातपत्राणं कुरुमे केशवप्रभो । छत्रं त्वत्प्रीतये दत्तं तस्यास्तु-च सदाशुभं । वस्त्रं- शीतवातोष्णसंत्राणं लज्जाया रक्षणं परं । देहालंकरणं वस्त्रमतः० ॥ यष्टिदानं-- त्रिलोकीनाथ० अनेन यष्टिदानेन प्रय० ॥ लोहदण्डः-- ज्ञानाज्ञानकृतं पापं

तथालोभात्कृतं चिरात ॥ लोहदण्डप्रदानेन सर्वंपापं व्यपोहतु ॥ अग्निष्टिका-- त्रिलोकीनाथ० अग्निष्टिका प्रदानेन० ॥ दीपदानं-- दीपो ज्ञानप्रदो नित्यं देवतानां प्रियःसदा । दानेनास्य भवेत्सौख्यं शांतिस्तद्वांच्छितं फलं ॥ तिलदानं- महर्षिगोत्रसंभूताः कस्यपस्यातिला: स्मृताः । तस्मादेषां प्रदानेन तस्यपापं व्यपोहतु ॥ तांबूलदानं-- सोपस्करं च तांबूलं सर्वदा मङ्गलप्रियं । प्रियं चैवतुदेवानां सौगन्ध्यं वदनेऽस्तुवै ॥ चन्दनं-- त्रिलोकीनाथ० चन्दनस्य प्रदानेन प्रयच्छा० ॥ पुष्पमाला- त्रिलोकीनाथ० पुष्पमाला प्रदानेन० इति चतुर्दशोपदानानि ॥ तिलपात्रदानं । घृतपात्रदानंच ॥ सुवासिन्यः स्त्रियोमरणे वंशपात्रीदानं-- तत्रदानवाक्यं-- इयं वंशपात्री सर्वसौभाग्यवस्तु संयुक्ता गंधाद्यार्चिता सदाक्षिणा अ०गोत्र अ०प्रेत तवो० इति ॥ एकादशाहमारभ्य संवत्सरांतिमदिनपर्यंतं सान्नजलपूर्णकुंभदानं । विप्रालये नदीतीरे चतुष्पथे देवालयेवा प्रेतोद्देशेन संवत्सरपर्यंतं दीप प्रज्वालनं रात्रौ । अन्यानि दानानि तद्दानवाक्यानि च ग्रंथांतरादवसेयानि ॥

॥ रुद्रगण श्राद्धं ॥

धर्माब्धिसारे-- तच्चैकादशरुद्रोद्देशन रुद्ररूपप्रेतोद्देशेन वा रुद्रोद्देशेपक्ष सव्येन । तद्रूपप्रेतोद्देशपक्षेऽपसव्येन ।

एकादशरुद्रनामानि- वीरभद्रः १ शंभुः २ गिरिशः ३ अजेकपात् ४ आहिर्बुध्न्यः ५ पिनाकी ६ अपराजितः ७ भुवनाधीश्वरः ८ कपाली ९ स्थाणुः १० भगः ११ इति । अत्रशक्तेन एकैकरुद्रनाम्नैकोविप्र इत्येकादशविप्रा भोज्याः। अशक्तेनतु सर्वोद्देशेन एक एववा । भोजनाभावे । आमान्नान्येकादशैकं वामान्नं देयं । अत्रश्राद्धे पिंडदानार्घ्याग्नौकरणाविकिराणामभावः । संक्षेपतः प्रयोगः- अ०गोत्रस्य अ०प्रेतस्य प्रेतत्वनि०प्त्यर्थं रुद्रगणश्राद्धं करिष्ये इति संकल्पः । एकैकरुद्ररूपप्रेतोद्देशपक्षे वीरभद्ररूपिन् अं० गोत्र अ०प्रेत इदमासनं । एवं सर्वनामोद्देशेन पृथक्पृथगुपचारादिदानं । सर्वोद्देशेनैकविप्रपक्षे सर्वाणि नामानि संकीर्त्य एतद्रूपिन् अ०गोत्र अ०प्रेतेत्यूहः । श्राद्धमिदं केश्चन नादृतं ॥

॥ वसुगण श्राद्धं ॥

इदं चकृताकृतं । अत्रापि वसूद्देशपक्षे यज्ञोपवीतिता । प्रेतोद्देशेच प्राचीनावीतिता । शक्तावष्टानां ब्राह्मणानां भोजनं । अशक्तौ सर्वोद्देशेनैकस्यैववा । अन्नाभावे विप्रसंख्ययामान्नदानं । वसुनामानि तु , ध्रुवः १ अध्वरः २ सोमः ३ आपः ४ अनिलः ५ अनलः ६ प्रत्यूषः ७ प्रभासः ८ इति । संकल्पवाक्यं- अ०गोत्रस्य अ०प्रेतस्य प्रेत०प्त्यर्थं

वसुगणश्राद्धं कु० ॥ आत्रापि रुद्रगणश्राद्धवदष्टवसूद्देशेन पृथक् पृथक्विप्रपक्षे ध्रुवस्वरूपिन् अमु० इति पृथगुद्देशः। सर्वोद्देशेनैकविप्रपक्षेच सर्वानि वसुनामानि सकीर्त्य एतत्स्वरूपिन् प्रेत० इत्यूहः ॥

॥ षोडशमासिकश्राद्धानां तंत्रेण प्रयोगः ॥

देशकालौ संकीर्त्य- अपसव्यं अमुक गोत्रस्य अ० प्रेतस्य प्रेतत्वनिवृत्त्योत्तमलोकावाप्त्यर्थं आद्यमासिक १ ऊनमासिक २ द्वितीयमासिक ३ त्रैपाक्षिक ४ तृतीयमासिक ५ चतुर्थमासिक ६ पंचममासिक ७ ऊनषण्मासिक ८ षष्ठमासिक ९ सप्तममासिक १० अष्टममासिक ११ नवममासिक १२ दशममासिक १३एकादशमासिक १४द्वादशमासिक १५ ऊनाब्दिकानि षोडशश्राद्धानि सपिंडीकरणाधिकारसिध्यर्थं अपकृष्य एकोद्दिष्ट विधिना तंत्रेणाहं करिष्ये। ततः षोडशब्राह्मणानाहूय तेषांश्मश्रुकर्माभ्यङ्गादिकारयित्वा कृतमाध्यान्हिकः षोडशपाकान्निष्पाद्य अशक्तावोदनभेदं कृत्वा श्राद्धमुपक्रमेत्। ब्राह्मणाभावे कुशबटूनां निर्माणं। कुशोऽसि० इति कुशग्रंथिं बध्वा इमंलोक० इति उदङ्मुखानां षोडशानां स्थापनं। अ०गोत्र अ०प्रेत आद्यमासिक श्राद्धे एषतेक्षण उपतिष्ठंतां एवं ऊनमासिकद्वितीयानुमासिकाद्यूहेन क्षणंदत्वा पृथक् पृथक् पाद्यादिदानं कुर्यात्।

सर्वेषां तंत्रेणवा अ०गोत्रस्य अ०प्रेतस्य प्रे०प्त्यर्थं आद्यमासिकादि ऊनाब्दिकांतश्राद्धेषु क्षणा उपतिष्ठंतां इति क्षणं दद्यात् । अ०गोत्रस्य अ०प्रेतस्य पाद्यान्युपतिष्ठंतां । अ० गोत्रस्य अ०प्रेतस्य गंधा उपतिष्ठंतां । अ०गोत्रस्य अ०प्रेतस्यनाानपुष्पाण्युप० । अ०गोत्रस्य प्रेतस्य आचमनान्युप० । उपग्रहकुशत्यागः । स्वपादप्रक्षालनं । आचमनम् । पुनः कुशोपग्रहः । प्राणायामः । अपस० । तूष्णीं दिग्बंधः। सव्यं कर्मार्थजलाभिमंत्रणं । यद्देवा० ३ । अपसव्यं । पाकप्रोक्षणं । दुष्टदृष्ट्यादिनिपातदोषदूषितः पाकः पूतोभवतु । सव्यं । देशकालसंपदस्तु । देशकालौ संकीर्त्य- अप० अमुक गोत्रस्य अमुक प्रेतस्य प्रेत०प्त्यर्थं आद्यमासिक १ ऊनमासिक २ द्वितीयमासिक ३ त्रैपक्षिक ४ तृतीयमासिक ५ चतुर्थमासिक ६ पंचममासिक ७ षष्ठमासिक ८ ऊनषाण्मासिक ९ सप्तममासिक १० अष्टममासिक ११ नवममासिक १२ दशममासिक १३ एकादशमासिक १४ द्वादशमासिक १५ ऊनाब्दिकानि १६ षोडशश्राद्धानि सापिंडीकरणाधिकारार्थं अपकृष्य एकोद्दिष्टविधिना एकतंत्रेण करिष्ये ॥ इति संकल्प्यासन दानं । अ०गोत्रस्य अ०प्रेतस्य एतानि आसनान्युपतिष्ठंतु । आवाहनाभावः । षोडशअर्घपात्राणांपूरणं । प्रत्येकमेकैकं पवित्रं निधाय तेषु

शंन्नोदेवीः० इत्यप आसिच्य तिलोऽसि० इति तूष्णींवातिलान् प्रक्षिपेत् । तूर्ष्णी गंधपुष्पप्रक्षेपः । पवित्राणि विप्रकरेषु निधाय अर्घाणिगृहीत्वा यादिव्या आ० अ०गोत्रस्य अ०प्रेतस्य इमे अर्घाउपति० । नसंस्रवसमवलयनं । नपात्रन्युब्जीकरणं । अर्घपात्राणां– गंधः उप० पुष्पाण्यु० धूपा उप० दीपाउप० आच्छादनान्युप० अर्घार्चनविधेः परिपूर्णताऽस्तु । ततः कुशबटूनां- अ०गोत्रस्य अ०प्रेतस्य इमे गंधा उ० । अ०गोत्रस्य अ०प्रेतस्य इमानि पुष्पाणि उ० । अ०गोत्रस्य अ०प्रेतस्य इमे धूपा उ० । अ०गोत्रस्य अ०-प्रेतस्य इमे दीपा उ० । अ०गोत्रस्य अ०प्रेतस्य एतानि आच्छादनान्युपति० । अर्चनविधेः परिपूर्णतास्तु । प्रत्युपचारमपां दानं । सव्यं आचमनं । सर्वेषांपुर पृथपृथक् त्रिकोणमंडलकरणं । षोडशभोजन पात्राणां स्थापनं । अपसव्यं । पात्राभिघारणं । पात्रेषु घृताक्तान्न परिवेषणं । नाम्नीकरणं । नपात्रालभावगाहौ । ऋतंत्वा सत्येनाभिषिंचामि । तिलविकरणं । अपोदत्वा । अ०गोत्रस्य अ०प्रेतस्य आद्यमासिकाद्यूनाब्दिकान्तश्राद्धेषु सोपस्कराणि अन्नानि उपति० । आपोशनदानं । सव्यं गायत्रीजपः । अपसव्यं । स्वदितं इति तृप्तिप्रश्नः । सुस्वादितमिति प्रतिव० । अ० गोत्रस्य अ०प्रेतस्य० अवनेजनान्युपति० । अ०गोत्रस्य

अ०प्रेतस्य आद्यमासिकश्राद्धे एषपिंड उपतिष्ठतां । १ । अ०गोत्रस्य अ०प्रेतस्य० ऊनमासिकश्राद्धे एषपिंडउप० । २ । अ०गोत्रस्य अ०प्रेतस्यद्वितीयमासिकश्राद्धे एषपिंड उ० । ३ । अ०गोत्रस्य अ०प्रेतस्य त्रैपाक्षिकश्राद्धे एषपिंड-उ० ॥ ४ ॥ अ०गोत्रस्य अ०प्रेतस्य तृतीयमासिकश्राद्धे एषपिंडउ० ॥ ५ ॥ अं०गोत्रस्य अ०प्रेतस्य चतुर्थमासिक श्राद्धे एषपिंडउ० ॥ ६ ॥ अ०गोत्रस्य अ०प्रेतस्य पंचम-मासिकश्राद्धे एषपिंडउ० ॥ ७ ॥ अ०गोत्रस्य अ०प्रेतस्य ऊनषाण्मासिकश्राद्धे एषपिंडउ० ॥ ८ ॥ अ०गोत्रस्य अ० प्रेतस्य षष्ठमासिकश्राद्धे एषपिंडउ० ॥ ९ ॥ अ०गोत्रस्य अ०प्रेतस्य सप्तममासिकश्राद्धे एषपिंडउ० ॥ १० ॥ अ० गोत्रस्य अ०प्रेतस्य अष्टममासिकश्राद्धे एषपिंडउ ॥ ११ ॥ अ०गोत्रस्य अ०प्रेतस्य नवममासिकश्राद्धे एषपिंडउ० ॥ १२ ॥ अ०गोत्रस्य अ०प्रेतस्य दशममासिकश्राद्धे एष-पिंडउ० ॥ १३ ॥ अ०गोत्रस्य अ०प्रेतस्य एकादशमासिक-श्राद्धे एषपिंडउ० ॥ १४ ॥ अ०गोत्रस्य अ०प्रेतस्य द्वादश-मासिकश्राद्धे एषपिंडउ० ॥ १५ ॥ अ०गोत्रस्य अ०प्रेतस्य ऊनाब्दिकश्राद्धे एषपिंडउ० ॥ १६ ॥ अ०गोत्रस्य अ०प्रेत-स्य आद्यमासिकाद्यूनाब्दिकांतश्राद्धेषु प्रत्यवनेजन्यु० ॥ हस्तप्रक्षालनं ॥ तूष्णीं सूत्रदानं ॥ अ०गोत्रस्य अ०प्रेतस्य

इमे गंधा उ० । अ०गोत्रस्य अ०प्रेतस्य आद्य०श्राद्धेषु इमानिपुष्पाण्युप० अ०गोत्रस्य अ०प्रेतस्य आद्य०श्राद्धेषु इमे धूपा उ० । अ०गोत्रस्य अ०प्रेतस्य आद्य०श्राद्धेषु इमे दीपा उ० । अ०गोत्रस्य अ०प्रेतस्य आद्य०श्राद्धेषु इमानि नैवेद्यानि उ० । अ०गोत्रस्य अ०प्रेतस्य आद्य०श्राद्धेषु इमानि फलान्युप० अ०गोत्रस्य अ०प्रेतस्य आद्य०श्राद्धेषु इमानि तांबूलान्युप० । अ०गोत्रस्य अ०प्रेतस्य आद्य०श्राद्धेषु इमा दक्षिणा उप० । पिंडार्चनविधेः परिपूर्णताऽस्तु सव्यं आचमनं । उपग्रहकुशत्यागः । पुनः कुशोपग्रहः । अपसव्यं । कुशोदकं गृहीत्वा अ०गोत्रस्य अ०प्रेतस्य आद्य०-श्राद्धेषु दत्तमन्नादि उ० । पिंडनामुपरि प्रत्येकमेकैकं पवित्रं निधाय जलधारापयोधारा चककर्तव्या । अ०गोत्रस्य अ०प्रेतस्य आद्य०श्राद्धेषु जलधारा-पयोधाराचोपति० । अ०गोत्रस्य अ०प्रेतस्य आद्यमा०ना-ब्दिकश्राद्धप्रतिष्ठासिध्यर्थं इमा रजतदाक्षिणा उप० । ततः— व्यजनं पादुकायष्टिः छत्रं चामरदर्पणे । मुकुटं दधितांबूलं चंदनागरुकेशर । कस्तूरीकर्पुरं हेम घृतकुंभश्च षोडश । इति दानामि कार्याणि । अशक्तौ तन्मूल्यदानं वा कुर्यात् । अभिरम्यतां इति कुशबटुविसर्जनं । अभिरतःस्म इति प्रति० । अनादिन० अतसी० । अ०गोत्रस्य अ०प्रेतस्य

द्यमा० ऊनाब्दिकांतश्राद्धेषु पिंडदानेन प्रेतत्वनिवृत्तिरस्तु अग्रे सपिंडीकरणाधिकारसंपदस्तु । पिंडानामुद्धरण । जले पिंडान्प्रक्षाल्य स्नात्वा विष्णोःपूजनं । ततः शांतिपाठः ॥

॥ सपिंडीकरण प्रयोगः ॥

पूर्वेद्युः कामकालसंज्ञकविश्वेदेवार्थं द्वौविप्रौ, यैः प्रेतपित्रादिभिः त्रिभिः ) सहसापिंडनं तदर्थं त्रयः, प्रेतस्य चैक इति षट् अशक्तौ सर्वत्र एकैक इति त्रीन्वा विप्रान्नि-मंत्रयेत् । कर्तुर्विप्राणांच ब्रह्मचर्यं । अपरेद्युः ब्राह्मणानां श्मश्रुकर्माभ्यंगादि कारयेत् । पाकद्वयं कारयित्वा निमंत्रि-तान् विप्रान् कुतुपकाले सवर्णैराहूतान् प्रत्युत्थानस्वागत वचनादिना सत्कृत्य कुशोपर्युपवेशयेत् । स्वयं माध्याह्नि-कं कृत्वा नद्यादौ स्नात्वाऽपराण्हे । पवित्रस्थो० रश्मिभिः । इति पवित्रं धृत्वा द्विराचम्य त्रिः प्राणानायम्य देशकालौ स्मृत्वा— अपसव्यं अ०गोत्रस्य अ०प्रेतस्य प्रेतत्वनिवृ-त्त्योत्तम लोकप्राप्त्यर्थं अमुकगोत्रैः अमुकशर्माभिः वसुरुद्रा-दित्यस्वरूपैस्तात्पितृपितामहप्रपितामहैः सह सपिंडी-करणं मृता हद्वादशेऽहनि पार्वणैकोद्दिष्टविधिना करिष्ये । ( मातुः सपिंडीकरणे अमुकगोत्राया अमुकप्रेतायाः अस्मा-त्पितामहीप्रपितामहीवृद्धप्रपितामहीभिः सह इति विशे-षः । एवं भ्रात्रादि सपिंडने ज्ञेयं ) कुरुष्वेति प्रतिवचनं ।

सव्यं ततो यजमानो ब्रह्मदण्डं ( कुशतिलसहितं हिरण्यं ) गृहीत्वा- ब्राह्मणानां प्रदक्षिणात्रयं कुर्यात् । तत्रमंत्राः- समस्तसं० च्युतंपदं ॥ ३ ॥ इति । ततः- आधिव्याधि० रुजं इति ब्राह्मणान्नत्वा तिलदर्भोदकानि गृहीत्वा- अपवित्रः० । शुद्धबालः० । इति स्थलं प्रोक्षेत् । ततः सपिंडीकरणश्राद्धे शरीरशुध्यर्थं पावनमंत्रपठणमहंकरिष्ये । इति संकल्प्य सहस्रशीर्षा० १६ पुनंतुमापितरः सो० ९ चित्पतिर्मा० ३ ॐ पुनातु भूः पुनातु० इति जपेत् । ततो यजमानो यज्ञोपवीती उदङ्मुखो दक्षिणं जान्वाच्य प्राङ्मुखस्य द्विजस्य दक्षिणं जानुं दक्षिणं हस्तेन स्पृष्ट्वा प्रेतस्य पित्रादिसंबंधिनां कामकालसंज्ञकानां विश्वेषे देवानां कृत्ये सपिंडीकरणश्राद्धे भवान् मयानिमंत्रितः इति कुशेननिमंत्रयेत् । आमंत्रितोऽस्मि इति प्रतिवचनं ॥ एवं द्वितीय विप्रसत्वे तस्यापि निमंत्रणं ॥ ततः– अक्रोधनै० इति नियमान् श्रावयित्वा भवद्भिः सपिंडीकरणश्राद्धीय देवकार्यं संपाद्यं । प्रसीदन्तु भवतः । इति प्रार्थयेत् । प्रसन्नाः स्म इति प्रति० ॥ अपसव्यं ॥ दक्षिणाभिमुखः पतितवामजानुः उदङ्मुखस्य द्विजस्य सव्यं जानुं दक्षिणहस्तेन स्पृष्ट्वा- प्रेतःपितृपितामहप्रपितामहानां अमुकगोत्राणां अमुकामुक शर्मणां वसुरुद्रादित्यस्वरूपाणां कृत्ये सपिंडीकरणश्राद्धे

भवान् मयानिमंत्रितः। इति कुशेन निमंत्रयेत्। आमंत्रि- तोऽस्मि। इति प्रतिव०। अक्रोधनै० इति नियमान् श्राव- येत्। ततः-- भवाद्भिः सापिंडीकरणश्राद्धीय पितृकार्यं स- म्पाद्यं। नः प्रसिदन्तु भवन्तः। इति प्रार्थयेत्। प्रसन्नाः स्मः। इति प्रति०। ( विप्राणां प्रतिपितृाभिन्नपक्ष- प्रेत पितुः अमुक गोत्रस्य अमुक शर्मणो वसुरूपस्य कृत्ये। प्रेत- पिताः हस्य अ०गोत्रस्य अ०शर्मणो रुद्ररूपस्य कृत्ये। प्रेत- प्रापितामहस्य अ०गोत्रस्य अ०शर्मण आदित्यरूपस्य कृत्ये। इति विशेषः एवमग्रे सर्वत्रोपचारसर्मपणादै।) एवं अ०गोत्रस्य अमुकप्रेतस्य कृत्ये सपिंडीकरणश्राद्धे भवान्निमंत्रितः इति कुशन निमंत्रयेत्। निमंत्रितोऽस्मि इति प्रति०। नियमादि- श्रावण प्राग्वत्। सव्यं। ततः कुशोपरि स्थित्वा द्विजान् स्वागतमिति पृच्छेत्। सुस्वागतमिति प्रति०॥ ततः श्राद्ध देशात्पुरतः प्राङ्गणे गोमय गोमूत्राभ्यां चतुरस्रं उत्तरे वैश्व- देवमण्डलं अपसव्यं तद्दक्षिणतः वर्तुलं पित्र्यमण्डलं ततोऽ- पि दाक्षणतस्त्रिकोणं प्रेतमण्डलं चाविधाय सव्यं देवमण्ड- लोपरि पूर्वाग्रकुशद्वयं तदुपरियवान् अपसव्यं पित्र्यमण्डले दाक्षिणाग्रकुशत्रयं तदुपरि तिलान् प्रेतमण्डले दक्षिणाग्रमे- कं कुशं तदुपरि तिलान् निदध्यात्। सव्य दवम- ण्डल पूजनं, देवमण्डलस्थाने अत्रंनमः। गंधं नमः। पुर्वा-

प्राग्द्विदर्भपत्रपुष्पं नमः इति । अपसव्यं । पितृमंडलपूजनं । पितृमंडलस्थाने अन्नं नमः । गंधं नमः । तिलान्नमः । दक्षिणाग्र त्रिदर्भपत्रपुष्पं नमः । एवं प्रेतमण्डलपूजनं । प्रेतमण्डलस्थाने अन्नं नमः । गंधं नमः । तिलान्नमः । दाक्षिणाग्रैकदर्भपत्रपुष्पं नमः । इति कुर्यात् । ततो देवब्राह्मणं देवमण्डलात्पाश्चिमतः । प्राङ्मुखमुपवेश्य स्वयं प्रत्यङ्मुख उपविश्य विप्रपादौ मण्डले निधाय- प्रेतःपित्रादि संबंधिनः कामकालसंज्ञका विश्वेदेवा सपिंडीकरणश्राद्धे इदंवःपाद्यं । इति पादयोर्यवोदकं दत्वा । अस्तुपाद्यं इति प्रतिव० देवीराभिष्टय० इति शुद्धजलेन पादौ प्रक्षाल्य देवपादयोः अन्नं-नमः । गंधं नमः । यवान्नमः । पूर्वाग्रद्विदर्भपत्रपुष्पं नमः। प्रेतापित्रादि संबंधिनः कामकालसंज्ञका विश्वेदेवाः एषवःपादार्घः । अस्तुपादार्घ इति प्रति० ॥ सहस्रशीर्षा० सूक्तं । इति विप्रपादादियुग्मक्रमेण पादजान्वंसशिरः सुगंधादिभिः पूजयेत् । अपसव्यं । पित्र्यमंडलाद्दाक्षिणतः पित्र्यब्राह्मणमुदङ्मुखमुपविश्य स्वयं दक्षिणाभिमुख उपविश्य विप्रपादौ मण्डलेनिधाय-- प्रेतपितृपितामहप्रपितामहाः अमुकसगोत्राः अमुकशर्मणः वसुरुद्रादित्यस्वरूपाः सपिंडीकरण श्राद्धे इदंवः पाद्यं । इति पादयोस्तिलोदकं दत्वा । अस्तुपाद्यमिति प्रति० । शंनोदेवीर० इति शुद्धजलेन पादौ प्र-

क्षाल्य पितृपादयोः अत्रं नमः । गंधं नमः । तिलान्नमः । दक्षिणाग्रत्रिदर्भपत्रपुष्पं नमः । प्रेतपितृपिता० स्वरूपाः एषवः पादार्घः । अस्तुपादार्घ इति प्रति० ॥ पितृभ्यः स्वधा०इति विप्रवामांगादिषु शिरोंसजानुपादेषु वामांगादियुग्मंक्रमेण गंधादिभिः पूजयेत् । प्रेतमण्डलाद्दाक्षिणतः प्रेतब्राह्मणं उदङ्मुखमुपवेश्य स्वयं दक्षिणाभिमुखउपविश्य विप्रपादौ मण्डले निधाय । अ०गोत्र अ०प्रेत सापिंडीकरण श्राद्धे इदंते पाद्यं । इति पादयोस्तिलोदकं दत्वा ( अस्तु पाद्यं इति प्रति० । शुद्धजलेन शंनोदेवी० इति प्रक्षाल्य- प्रेतपादयोः अत्रंनमः । गंधंनमः । तिलान्नमः । दक्षिणाग्रैकदर्भपत्रपुष्पं नमः । अ०गोत्र अ०प्रेत एषते पादार्घः । अस्तुपादार्घः । इति प्रति० । प्रेताजयता० इति गंधादिभिः पितृक्रमेणपूजयेत् । ततो मण्डलादुत्तरतो ब्राह्मणाआचम्य स्वयं पवित्रं त्यक्त्वा स्वयं पादौ प्रक्षाल्य पादप्रक्षालनतः प्राच्यां द्विराचम्य पवित्रंधृत्वा पुनराचम्य विप्रपूर्वक श्राद्धदेशंव्रजेत् । ततो देवब्राह्मणोपवेशनार्थं प्रागग्रकुश द्वयसहितमासनंनिधाय तदुपरि यवान् निक्षिप्य ब्राह्मणदक्षिणहस्तं दक्षिणहस्तेनगृहीत्वा वामहस्तेनासनं स्पृशन् प्रेत पित्रादिसंबंधिनां कामकालसंज्ञकानां विश्वेषां देवानां सपिंडीकरणश्राद्धेभूर्भुवः स्वः इदमासनं । आस्यतां । इति

देवब्राह्मणं प्राङ्मुखमुपवेशयेत् । आसीनाःस्मः इति प्रति० ॥ अपसव्यं । पितृब्राह्मणोपवेशनार्थं दक्षिणाग्रकुशत्रयसाहितमासनं निधाय तदुपरि तिलान् निक्षिप्य ब्राह्मणदक्षिणहस्त दक्षिणहस्तेन गृहीत्वा वामहस्तेनासनं स्पृशन् प्रेतपितृपितामहप्रपितामहानां अमुकगोत्राणां अमुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां सपिंडीकरणश्राद्धे भूर्भुवः स्वः इदमासनं । अस्यतां इति पितृब्राह्मणउदङ्मुखमुपवेशयेत् । असीनाः स्मः । इति प्रतिवं० । प्रेतब्राह्मणोपवेशनार्थं पितृब्राह्मणपूर्वतो दक्षिणाग्रैककुशसहितमासनं निधाय तदुपरि तिलान् निक्षिप्य ब्राह्मणदक्षिणहस्तं दक्षिणहस्तेनादाय वामहस्तेनासनं स्पृशन् अ०गोत्रस्य अ०प्रेतस्य सपिंडीकरणश्राद्धे भूर्भुवःस्वः इदमासनं । अस्यतां इति उदङ्मुखं प्रेतब्राह्मणमुपवेशयेत् ॥ आसनोऽस्मि इति प्र० ॥ सव्यं । ततः प्रत्यासनसमीपे तिलतैलेनघृतेनवा दीपस्थापनं । अपसव्यं । तिलाः स्तुरक्षत्व० रक्षकः । इति द्वारदेशे तिलकुशान् प्रक्षिपेत् सव्यम् । अग्निष्वात्ताः पितृ० यमोरक्षांकरोतुमे ॥ इति यवतिलान् दिक्षुयथालिंगं विकिरेत् । ततः ईशान्यां ताम्रपात्रमुदकेनापूर्य तत्र कुशत्रयतिलगंधपुष्पादि निक्षिप्य- यद्देवा० ३ इति अभिमंत्र्य- दुष्टदाष्टिनिपातनादिदोषदूषितः पाकः पूतोभवतु । इत्युच्चार्य तज्जलेन-

सर्वपाकं प्रोक्ष्य श्राद्धदेशे स्थापितान् श्राद्धोपयोगिपदार्थानापि प्रोक्षेत् । ततः— श्राद्धभूमौ० प्रवर्तये । प्रवर्तयेतिप्रति० ॥ अपसव्यं- सोमस्य नीविर० इति कुशत्रयं सतिलं गृहीत्वा निहन्मिसर्व० इति कुशत्रयातिलयुतानां परिधान पुरस्थितदशानां दक्षिणकटिसलग्नवस्त्रंबहिर्भागे संवेष्ट्य- गोपनरूपं नीविबंधनं कुर्यात् । सव्यं । आचमनं । प्राणायामः । देशकालयोः कीर्तनं अपसव्य अ०गोत्रस्य अ० प्रेतस्य प्रेतत्वनिवृत्तिद्वारोत्तमलोकावाप्त्यर्थं अमुकगोत्रैः अमुक शर्मभिः तत्पितृपितामहप्रपितामहैः सह सपिंडीकरणं मृताहाद्द्वादशाहे कामकालसंज्ञकविश्वेदेवपूर्वकं अर्घ्यपिंडसहितं युष्मदनुज्ञया पार्वणैकोद्दिष्टविधिना करिष्ये । कुरुष्वेतिप्रति० । सव्यं । मव्याहृतिकां गायत्रीं जप्त्वा देवब्राह्मण हस्ते उदकं दत्वा कामकालसंज्ञकानां विश्वेषां देवानां सपिंडीकरणश्राद्धे इदमासनं इत्यासनेदक्षिणतः सयवान् प्रागग्रान् दर्भान् दद्यात् । स्वासनं इतिप्र० । अपसव्यं । अमुकसगोत्राणां प्रेतपितृपितामहप्रपितामहानां अमुकामुक शर्मणां वसुरुद्रादित्यस्वरूपाणां सपिंडीकरणश्राद्धे इदमासनं । इत्यासने सतिलान् दक्षिणाग्रान् दर्भान् दद्यात् । स्वासनं इति प्रति० । ।अ० गोत्रस्य अ० प्रेतस्य सपिंडीश्राद्धे इदमासनं । इत्यासने सतिलान् दक्षिणाग्रान् दर्भान्

दद्यात् । स्वासनमितिप्र० । सव्यं ततो यवानादाय प्रेत-पित्रादिसंबंधिनः कामकालसंज्ञकान् विश्वान् देवान् भवत्सु आवाहयिष्ये, आवाहय इतिप्रति० । ततो विप्रदक्षिणंजानु-मालभ्य- विश्वेदेवासआ० दत । इति जप्त्वा । विप्रस्य पुरतो प्रादक्षिण्येन यवान्विकीर्य विश्वेदेवाःशृणु० मादयध्वं इति जपेत् । अपसव्यं । तिलानादाय-अमुकस गोत्रान् प्रेतपितृ-पितामहप्रपितामहान् अमुकामुकशर्मणः वसुरुद्रादित्यस्वरू-पान् भवत्सु आवाहयिष्ये । आवहय इति प्रति० । ततो विप्र-वागजानुमलभ्य उशंतस्त्वानिधि० अत्तवे । इति जप्त्वा विप्रस्याग्रतोऽप्रादक्षिण्येन तिलान्विकीर्य आयंतुनः पितरः० त्तस्मान् ॥ इति जपेत् । एकोद्दिष्टे नावाहनं । सव्यं । ततो-वैश्वदेविकमर्घपात्रद्वयं देवाग्रभूमावुपालिप्य दर्भेषुप्रागग्रेषु उत्तानं निधाय पवित्रांतर्हित एकैकस्मिन्-शनोदेवी० इत्यप आसिच्य यवोसिधान्यरा० इति यवान् प्रक्षिप्य गंधपुष्पं च तूष्णीं दद्यात् । अपसव्यं पित्रग्रभूमावुपालिप्य दक्षिणाग्र-दर्भेषु पात्रत्रयमुत्तानं निधाय दर्भत्रयान्विते एकैकास्मिन् शंनोदेवी इतिपितृतीर्थेन आसिच्य तिलोऽसिसोमदैवत्यो० इति तिलान् प्रक्षिप्य गंधपुष्पं चतूष्णीं दद्यात् । प्रेताग्र-भूमावुपलिप्य दक्षिणाग्रदर्भोपरिपात्रमेकमुत्तानं निधाय एकं पवित्रं निधाय शंनोदेवीः इति अपआसिच्य तिलोऽसि०

इति तिलान् प्रक्षिप्य गंधंपुष्पं च तूष्णीं दद्यात् । ततः प्रेतार्घ्यपात्रं दक्षिणहस्तेन गृहीत्वा पितुरर्घ्यपात्रेणसंयोज॰ येत् अ॰ गोत्रस्य अ॰ प्रेतस्यार्घ्यपात्रस्थं जलं चतुर्धा-विभक्तं तत्प्रथमांशं अ॰ गोत्रस्य प्रेतपितुः अमुकशर्मणः वसुरूपस्यार्घ्यपात्रेणसहसंयोजयिष्ये (संयोजय इतिप्रति॰ । येसमानाः समनसः पितरो यमराज्ये । तेषां लोकः स्वधा-नमोयज्ञो देवषुकल्पातम् ॥१॥ येसमानाः समनसो जीवा-जीवेषुमामकाः ॥ तेषा॰ श्रीर्मायि कल्पतामस्मिँलोके शत॰ समाः ॥ २ ॥ । इति संयोजयेत् । अनेन संयोजनेन प्रेतस्यप्रेतत्वनिवृत्तिरस्तु॰ । अ॰ गोत्रस्य॰ अ॰ प्रेतस्यार्घ्यपात्रस्थं द्वितीयमंशंजलं अ॰ गोत्रस्य प्रेत॰ पितामहस्य अ॰ शर्मणः रुद्ररूपस्यार्घ्यपात्रेण सहसंयोज॰ यिष्ये । संयोजय इतिप्रति॰ । येसमाना॰ कल्पतां । येस॰ मानाः॰ समाः ॥ इतिसंयोजयेत् । अनेन॰ निवृत्तिरस्तु । अ॰ गोत्रस्य अ॰ प्रेतस्यार्घ्यपात्रस्थं तृतीयांशं अ॰ गोत्र-स्य प्रेतप्रपितामहस्य अ॰शर्मणः आदित्यरूपस्य अर्घ्यपात्रेण संयोजयिष्ये । संयोजयइति प्रति॰। येसमानाः॰ कल्पतां । येसमानाः॰समाः इतिसंयोजयेत् । अनेन सं॰ निवृत्तिरस्तु । उत्तमलोकावाप्तिरस्तु । सव्यं । देवब्राह्मणहस्ते उदकंदत्वा अर्घ्यपात्रस्थपवित्रेदत्वार्घ्यपात्रादर्घ्यंगृहीत्वा । या दिव्या

आपः० भवंतु । प्रेतपित्रसंबधिनः कामकालसंज्ञका विश्वे-देवाः एषवोऽर्घ्यःइतिदद्यात् अस्त्वर्घ्य इतिप्रति० एवंद्वितीये अपसव्यं, पितृब्राह्मणहस्ते उदकंदत्वा अर्घ्यपात्रस्थपवि-त्राणिदत्वा अर्घ्यपात्रात्सशेषमर्घ्यं यादिव्या आ० अ० गोत्रप्रेतपितः अ० शर्मन् वसुरूप एषतेऽर्घ्यः इतिदद्यात् । अस्त्वर्घ्य इति प्रति० । पुनरपोदत्वा प्रेतपितामहपात्रस्थ पवित्राणि दत्वार्घ्यपात्रात्सशेषमर्घ्य-यादिव्या० अ० गोत्र प्रेतपितामह अ० शर्मन् रुद्ररूप एषतेऽर्घ्यः इतिदद्यात् अ-स्त्वर्घ्य इति प्रति०॥ पुनरपोदत्वा प्रेतप्रपितामहपात्रस्थपवि त्राणि दत्वा यंपात्रात्सशेषमर्घ्यं० अ० गोत्रस्य प्रेतप्रपितामह अ०शर्मन् आदित्यरूप एषतेऽर्घ्यः इतिदद्यात् । अस्त्वर्घ्यः इतिप्रति०ततः प्रेतार्घ्यपात्रं दक्षिणहस्ते गृहीत्वा प्रेतब्राह्मण हस्ते जलंदत्वा तत्पात्रस्थपवित्रंदत्वा यादिव्या० अ० गोत्र अ० प्रेतएषतेऽर्घ्य इति सर्वंदद्यात् अस्त्वर्घ्य इतिप्रति०। प्रथमे पितृपात्रे सर्वपित्र्यहस्तास्थितकुशान्निधाय सर्वपात्र-स्थितसंस्रवान्समवनीय पितृभ्यः स्थानमसि इति न्युब्जं-तत्पात्रं देवपित्रोर्मध्यभागेनिधाय तदुपरि स्वधावाचनीयान् त्रीन् दर्भान्निदध्यात् । सव्यं । देवहस्ते उदकंदत्वा. एषते गंध इतिगंधं, सुगंधिरितिप्रति० ॥ इमे यवाः इति यवान्, संतुयवाः । श्रीतुलसीभृंगिराजशतपत्रपुष्पाणि इतितुलस्यादि,

सुपुष्पाणि । धारणार्थे यज्ञोपवीते इति यज्ञोपवीतद्वयं, सूप-
वीते । फलार्थे पूगीफलं इतिफलं सुफलं, । आच्छादनार्थे
किंचिद्व्यावहारिकद्रव्यं इति द्रव्यं स्वाच्छादनं । सर्वार्थे इमौ
कुशौ,अस्तुपवित्रं । प्रेतपित्रादिसंबंधिभ्यः कामकालसांज्ञिके-
भ्यो विश्वेभ्यो देवेभ्यः सपिंडीकरणश्राद्धे इदं गंधाद्यर्चनं ।
स्वाहानमः । अपसव्यं । पितृद्विजहस्ते उदकंदत्वा एषते गंधः
सुगंधिः इमे तिलाः सन्तु तिलाः । श्रीतुलसीभृंगिराजशत-
पत्रपुष्पाणि, सुपुष्पाणि । धारणार्थे इमे यज्ञोपावीते फलार्थे
पूगफलं, सुफलं । किंचिद्व्यावहारिकद्रव्यं, स्वाच्छादनं ।
सर्वार्थे इमे कुशाः अस्तु पवित्रं अमुकगोत्रेभ्यः प्रेतपितृ
पितामहप्रपितामहेभ्योऽमुकामुकशर्मभ्यः वसुरुद्रादित्यस्वरू-
पेभ्यः सपिंडीकरणश्राद्धे इदं गंधाद्यर्चनंस्वधानमः प्रेताद्विज
हस्ते उदकंदत्वा एषतेगंधः सुगंधिः । इमे तिलाः संतुति-
लाः । इमानिपुष्पाणि, सुपुष्पाणि । धारणार्थे इमे उपवीते,
सूपवीते । फलार्थे पूगफलं. सुफलं । आच्छादनार्थे किंचि-
द्व्यावहारिकद्रव्यं, स्वाच्छादनं । सर्वार्थे इमेकुशाः, अस्तु
पवित्रं । अ०गोत्र अ० प्रेतसपिंडीकरणश्राद्धे इदं गंधा-
द्यर्चनं तवोपतिष्ठतां । सव्यं । अत्रावसरे द्विजानांतिलक
धारणं । कर्ताऽऽचम्य द्विजाग्रपातितकुशादीन्निरस्य दैवेचतु-
रस्रं अपसव्यं पित्र्ये चतुरस्रं प्रेतमंडलं चत्रिकोणं कृत्वा ।

पात्रासादनं ।पंक्तिवारणं । करशुद्धिः । ततो घृताक्तमन्नमादाय द्विजसमीप उपविश्य आचम्य. अपसव्यं सपिंडीकरण श्राद्ध अग्नौकरणं करिष्ये इति । कुरुष्वेत्यनुज्ञातः अग्नयेकव्यवाहनायस्वाहा इदमग्नयेकव्यवाहनायनमम सोमायपितृमतेस्वाहा इदंसोमायपितृमतेनमम इत्याहुतिद्वयं पित्र्यपंक्तिमूर्धन्यविप्रपाणौ जुहुयात् । विप्रः स्वपाणिस्थमन्नं स्वभोजनपात्रेनिधाय करशुद्धिं कृत्वाऽऽचमनं कुर्यात् । सव्यं मूर्धानंदिवः इति देवपात्राभिधारणं । अपसव्यं । मूर्धानंदि० पित्र्यप्रेतपात्राभिधारणं । सव्यं । देवपात्रेहुतशेषदत्वा अपसव्यं पित्र्यादिपात्रे हुतशेषदत्वा सव्यं पात्रमालभ्य जपति पृथ्वीतेपात्रं०। स्वाहा। अपसव्यं पित्र्यपात्रमालभ्य जपति पृथ्वीते० । सव्यं देवद्विजांगुष्ठमन्नेऽवग्राह्य इदाविष्णुः इति जपित्वा अपहता अ०षदः । इति यवान्विकीर्य अपसव्यं पितृद्विजांगुष्ठमन्नेवग्राह्य इदंविष्णुः० । इति जपित्वा अपहता० इति तिलान्विकीर्य सव्यं जलंस्पृष्ट्वा देवपूर्वपारिवेषणं कृत्वा गायत्र्यादेवपात्रस्थमन्नंप्रोक्ष्य तूष्णीं परिषिच्य सव्येन पाणिनापात्रमालभ्य दक्षिणेन यवंजलंचादाय-इदमन्नं परिविष्टं परिवेक्ष्यमाणंच प्रेतपित्रादिसंबंधिभ्यः कामकालसंज्ञिकेभ्यो विश्वेभ्यो देवेभ्यः संपिंडीकरणश्राद्धे अस्यब्राह्मणस्य अतृप्तिभोजनपर्याप्तममृतरूपेण संपद्यतांस्वहा हव्यंनमम ।

इति प्रात्रवामेभूमौक्षिपेत् । पितृपात्रस्थमन्नं गायत्र्याप्रोक्ष्य तूष्णीं परिषिच्य-अपसव्यं सव्येन पाणिनापात्रमालभ्य दक्षिणेन तिलान् जलंचादाय इदमन्नं परिविष्टं परिवेक्ष्यमाणं च अ० गोत्रेभ्यः प्रेतपितृपितामहप्रपितामहेभ्यः अ० शर्मभ्यः वसु०स्वरूपेभ्यः सपिंडीकरणश्राद्धे अस्यब्राह्म०स्य आतृप्तिभोजनपर्याप्तं अमृतरूपेण संपद्यतां स्वधाकव्यंनमम । इतिपात्रदक्षिणभागे भूमौक्षिपेत् । एवमेव. अ० गोत्राय अ०प्रेताय सपिंडीकरणश्राद्धे अस्य० रूपेणोपतिष्ठतां इति । उदकोपस्पर्शः—ततउदङ्मुखस्तिष्ठन् ईशानवि० गयायै नमः । गदाधराय० । काशीविश्वेश्वराय०। बिंदुमाधवाय०। इतिनत्वाश्राद्धभूमिं "गयेयं" गयारूपेणध्यात्वा । सव्यं । ब्रह्मार्पणं० । तत्सद्ब्रह्मार्पणमस्तु । अपसव्यं । एकोविष्णुः० अनेन सपिंडीकरणश्राद्धीयब्राह्मणभोजनेन भगवान् प्रेतपित्रादिस्वरूपी श्रीमज्जानार्दनवासुदेवः प्रीयतां । आपोशनार्थं उदकं सव्येन देवाद्विजहस्ते, अपसव्येन पितृद्विजहस्ते प्रेतपितृहस्तेच दद्यात् । विप्रानित्यभोजनवत्परिषेचनं कृत्वा बलिदानवर्जं 'अमृतोपस्तरणमसी, इति आपोशनं कृत्वा प्राणाहुतीर्गृण्हीयुः । कर्ताच० प्राणायस्वाहा- अपानाय० व्यानाय० उदानाय० समानाय० ब्रह्मणेस्वाहा इति प्राणाहुतिमंत्रान् पठेत् । विप्राः वाङ्नियमाद्युक्तनियमयुक्ता

भुंजीरन् । कर्तापसव्यसव्याभ्यां पितृपूर्वकं हस्तोदकं दत्वा दशवारं गायत्रीं जप्त्वा विप्रान् प्रार्थयेत् । अपेक्षितं० मानसैः ।। विद्यमानशाकपाकादिपदार्थेषु यद्रोचते तद्-ग्राह्यं यन्नरोचते तत्याज्यं ।यथसुखंजुषध्वं । जुषामहै इति प्रति० । ततोऽश्नत्सुविप्रेषु दर्भेषु आसीनो यज्ञोपवीती दक्षिणभिमुखः सप्रणवव्याहृतिकां गायत्रीं त्रिःसकृद्वाकृणुष्व पाज इति पंचसुरावतंबर्हिषदं सप्तदशउदीरतामवर इतित्रयो-दश षोडशर्चं पुरुषसूक्तं। आशुःशिशानो इति अप्रतिरथान् अन्यानिच पावनानिरुद्राध्यायादीन् श्रावयेत् । ततो यथा सुखं भुक्तेषुविप्रेषु, तृप्तान्ज्ञात्वा । अपसव्यं देवपितृपात्र मध्यभागे गोमयेनोपलिप्य तत्र दक्षिणाग्रदर्भत्रयंनिधाय सर्वमन्नमुदकेनाप्लाव्य गृहीत्वा-अग्निदग्धाश्च-गतिं । अग्नि दग्धेभ्योऽनग्नि० प्रसूतेभ्यः इदंविकिरमन्नंदायते इति पितृ-तीर्थेनदत्वा तदुपरि तिलोदकंनिषिच्य हस्तौप्रक्षाल्य पवित्रे त्यक्त्वा सव्यं आचम्य पवित्रे धृत्वा पुनराचम्य सव्याप-सव्याभ्यां सकृत्सकृदशो दत्वा सप्रणवव्याहृतिकां गायत्रीं जप्त्वा मधुवाता० ३ मधुमधुमधु इति पठेत् । ततः प्रेत पित्रादिसंबंधिनः कामकालसंज्ञका विश्वेदेवाः सापिंडीकरण श्राद्धे तृप्ताःस्थ, तृप्ताःस्मः इति प्रति० । अ० गोत्राः प्रेत पितृपितामहप्रपितामहाः अ० शर्माणः वसुरुद्रादित्यस्वरूपाः

सपिंडीकणरश्राद्धे तृप्ताःस्थ । तृप्ताःस्मः इतिप्रति० । अमुक गोत्र, अ० प्रेत सापिंडीकरणश्राद्धे स्वादितं । सुस्वादितंमिति प्र०। शेषमन्नं किंक्रियतां । पिंडार्थमुपयुज्यतां इति प्रति०। ततोविप्रा 'अमृतापिधानमासिस्वाहा' इति उत्तरापोशनं कुर्युः ततः कर्ता (भोजनपात्रेभ्यः पुरतो व्याममात्रामरत्निमात्रां वा भुवमुत्सृज्य) द्विजसमीपे दक्षिणाभिमुख उपाविश्य सव्यंजान्वाच्य दक्षिणाप्रवणं भूभागं हस्तमात्रं गोमयेनोपलिप्य तत्र कुशमूलेन अपहता० इति दक्षिणाग्रां रेखामुल्लिख्याप उपस्पृश्य रेखाग्रे उल्मुकं येरूपाणि० इति निधाय जलंस्पृष्ट्वोदपात्रेण दक्षिणसंस्थं रेखायां पितृतीर्थेनावनेजनं कुर्यात् । अ० गोत्र प्रेतपितः अ० शर्मन् पिंडस्थाने अवनेनिक्ष्व । अ० गोत्र प्रेतपितामह अ०शर्मन् पिंडस्थाने अवनेनिक्ष्व ।अ० गोत्र प्रेतप्रपितामह आदित्यरूप सापिंडीकरणश्राद्धे पिंडस्थाने अवनेनिक्ष्व ।अ० गोत्र अ० प्रेत सापिंडीश्राद्धे पिंडस्थाने मद्दत्तमवनेजनं तवोपतिष्ठताम् । सकृदाच्छिन्नान् दर्भान् दाक्षिणाग्रान् रेखायामास्तीर्य प्रेतापिंडस्थानेच अ० गोत्र अ० प्रेत पिंडस्याधो दर्भासनं तवोपतिष्ठतां इति चास्तीर्य । ततः पार्वणपाकात् अवशिष्टेनान्नेन नारीकेलप्रमाणं। पिंडत्रयंकृत्वा ततः एकापिंडमादाय-अ० गोत्र प्रेतापितः अ० शर्मन् वसुरूप एतत्तेऽन्नंस्वधा ।

इंद अ गोत्राय प्रेतपित्रे अमुक शर्मणे वसुरूपाय नमम । अ० गोत्र प्रेतपितामह अ० शर्मन् रुद्ररूप एतत्ते ऽस्वधा । इदं अ० गोत्राय प्रेतपितामहाय अ० शर्मणे द्ररूपाय नमम अमुक गोत्र प्रेतप्रपितामह अ० शर्मन् आदित्यरूप एतत्तेन्न ऽस्वधा, इदं अ० गोत्राय प्रेतप्रपितामहाय अमुक शर्मणे आदित्यरूपाय नमम ततः प्रेतपाकावशिष्टान्नेन जंबीराकारं पिंडंकृत्वा-आदय-अ गोप्र अ० प्रेतसपिंडीकरण श्राद्धे एषपिंडोमयादीयते तवोपतिष्ठताम् । अ० गोत्र अ० प्रेत प्रत्यवनेजनमिंदवोपति० ! अ० गोत्रप्रेताच्छादनामिदं-तवोप० । अ० गोत्र अ०प्रेत चंदनमिदंतवोप०। अ० गोत्र अ० प्रेत पुष्पमिदंतवोप०। अ० गोत्र अ० प्रेत एषधूपस्त-वोप० । अ० गोत्र अ प्रेत दीपस्तवोप० । अ० गोत्र अ० प्रेत इदं नैवेद्यंतवोप० । अ० गोत्र अ० प्रेत फलमिदंतवोप अ० गोत्र अ० प्रेत तांबूलमिदंतवोप० । अ० गोत्र अ० प्रेत इदं दक्षिणां तवोप० । अनेन पिंडस्यार्चनविधेः परि-पूर्णताऽस्तु अनेन पिंड़दानेन प्रेतस्यप्रेतत्वानिवृत्तिरस्तु । सद्गतिः प्राप्तिरस्तु । अ० गोत्रस्य अ० प्रेतस्य दत्तमन्न-पानादिकं तवोप० । पिंडोपरितूष्णीं प्रेतपवित्रार्पणं । जल-धारातवोप० अ० गोत्र अ० प्रेत सापिंडीकरणश्राद्धप्रतिष्ठा सिध्यर्थामियं रजतदक्षिणा तवो ततः-प्रेतपिंडं प्रेतपित्रादि

पिंडेषु संयोजयिष्ये । संयोजय इति विप्रैरनुज्ञातः प्रेतपिंडं सुवर्णशलाकया रौप्यशलाकया दर्भरज्वावा त्रिधासमंविभज्य विष्णुं त्रिःस्मृत्वा आद्यभागमादाय-येसमानाः० कल्पतां येसजाताः० समाः इति मंत्रद्वयं पठित्वा अ० गोत्रस्य अ० प्रेतस्य पिंडं अ० गोत्रस्य प्रेतपितुः अ० शर्मणो वसुरूपस्य पिंडेन सह संयुनज्मि इति पिंडं वर्तुलंकुर्यात् । अनेन संयोजनेन अ० गोत्रस्य अ० प्रेतस्य प्रेतत्वनिवृत्तिरस्तु । वसुलोकावाप्तिरस्तु । पुनर्द्वितीयं भागमादाय-येसमानाः कल्पतां ॥१॥ येसजाताः० समाः ॥२॥ अ० गोत्रस्य अ० प्रेतस्य पिंडं अ० गोत्रस्य प्रेतपितामहस्य अ० शर्मणो रुद्ररूपस्य पिंडेन सहसंयुनज्मि इति पठित्वा प्रपितामह पिंडे संयोज्य वर्तुलंकुर्यात् । अनेन संयोजनेन अ० गोत्रस्य अ० प्रेतस्य प्रेतत्वनि० रुद्रलोकावाप्तिरस्तु । पुनस्तृतीयं भागमादाय येसमानाः० कल्पतां ॥ १ ॥ येसजाताः० समाः ॥ २ ॥ अ० प्रेतस्यपिंडं अ० गोत्रस्य प्रेत प्रपितामहस्य अ० शर्मणः आदित्यरूपस्य पिंडेन सहसंयुनज्मि इति पठित्वा । प्रपितामहपिंडेसंयोज्य वर्तुलंकुर्यात् । अनेन पिंडसयोजनेन अ० गोत्रस्य अ० प्रेतस्य प्रेतत्व० आदित्यलोकावाप्तिरस्तु । ततः पिंडानभिमृश्य इदं पठेत् । एषवोऽनुगतः प्रेतः पितृत्वंप्राप्तवानसौ । शुभंभवतु शेषा-

णांजायतां चिरजीवितां । समानीव आकूतिः समाना हृद-
यानिवः। समानमस्तुवोमनो यथावः सुसहासति । अत ऊर्ध्वं
प्रेतशब्दोच्चारोनकार्यः। ततः पिंडाग्रभागेलेपभागिनः प्रीयंतां
इति दर्भाग्रे हस्तलेपं निमृज्यात् । सव्यं । अत्र पितरो-
मादयध्वं सव्यावर्तनं श्वासधारणंकृत्वा तथैवावृत्यदक्षिणाभि
मुखःश्वासविसर्जनं अमीमदंत० इति कुर्यात् । अपसव्यं ।
अ० गोत्र पितः अ० शर्मन् वसुरूप पिंडस्योपारिप्रत्यवने
निक्ष्व । अ० गोत्र पितामह अ० शर्मन् रुद्ररूप पिंडस्यो-
पारिप्रत्य० । अ० गोत्र प्रपितामह शर्मन् आदित्यरूप
पिंडस्योपारिप्रत्य० । इति पूर्ववदवनेजनं कृत्वा नीवींवि
स्रंस्य पिंडमूलेनिधाय नमोवः पितरः शुष्माय नमोवः
पितरस्तपसे । नमोवः तस्मै । नमोवः० साय नमोवः०
मन्यवे । स्वधायै० नमः इति षडंजलीन् कृत्वा । एतद्वः
पितरोवासः इति त्रीणि त्रीणि सूत्राणि प्रतिपिंडंदत्वा ।
सव्यं गृहान्नः पितरोदत्त। इति जप्त्वा। अपसव्यं । उदायु-
षास्वाहा० अनु । इत्युत्तिष्ठेत् । सव्यं देशकालौ संकीर्त्य
अस्मत्कुलाभिवृध्यर्थं पिंडपूजांकरिष्ये पिंडसंस्थाः पितरः
गंधं स्वधा पिंडसं० यवाक्षततिलाक्षतान् स्वधा । पिंडसं०
श्रीतुलसीभृंगिराजशतपत्रपुष्पाणिस्वधा। पिंडसं०धूपंस्वधा ।
पिंडसं० दीपंस्वधा । पिंडसं० नैवेद्य० । पिंडसं० पूगीफल

तांबूलं० पिंडसं० दक्षिणांस्वधा । एतस्यगंधाक्षतपुष्पधूपदीपनैवेद्यतांबूलदक्षिणारूपाष्टार्चनविधेः परिपूर्णतास्तु । अष्टार्चनविधेः परिपूर्णतास्तु इतिप्रतिव० । अत्रावसरे विप्राणां करशोधनादि आचमनंच । ततोदेवाग्रभूमौ सुप्रोक्षितमस्तु इति जलेनासिच्य देवद्विजहस्ते-शिवाआपःसंतु, संतुशिवाआपः । सौमनस्यमस्तु, अस्तुसौमनस्यं । यवाः पांतु, पांतुयवाः । दर्भाः पांतु, पांतु दर्भाः । कामकालसंज्ञकानां विश्वेषांदेवानांयद्दत्तं सपिंडीकरणश्राद्धीयमन्नमुदकं तदक्षय्यमस्तु, अस्त्वक्षय्यं इतिप्र । अपसव्यं । पित्राग्रभूमौ सुप्रोक्षितमस्तु, पितृद्विजहस्ते शिवाआपःसंतु, संतुशिवाआपः । सौमनस्यमस्तु अस्तुसौमनस्यं तिलाः पांतु, पांतु तिलाः । दर्भाःपांतु, पांतुदर्भाः । अ०गोत्राणां पितृपितामहप्रपितामहानां अ०शर्मणां वसुरुद्रादित्यस्वरूपाणां यद्दत्तंसापिंडीकरणश्राद्धीयमन्नमुदकं तदक्षय्यमस्तु । अस्त्वक्षय्यं इति प्र० । सव्यं । अघोराः पितरःसंतु, संत्वघोराः पितरः । गोत्रं नोवर्धतां, वर्धतांवोगोत्रं । दातारोऽनोभिवर्धतां, वर्धतांवोदातारः । वेदाश्चनोऽभिवर्धतां, अभिवर्धतांवोवेदाः । संततिर्नोभिवर्धतां, अभिवर्धतांवोसंततिः । श्रद्धाचनोमाव्यगमत्, माव्यागमद्वःश्रद्धा बहुदेयंचनोऽस्तु, अस्तुवोबहुदेयं । अन्नंचनो बहुभवेत्, भवतुवोबव्हन्नं । अतिथींश्चलभेमहि, लभंतांवोऽ

तिथयः । एताः आशिषः सत्याः संतु । संत्वेता आशिषः सत्याः इतिप्रार्थयेदाशीः । ततः अपसव्यं, स्वधावाचनीयान् सपवित्रान् कुशान् पिंडपश्चिमतोदक्षिणाग्रान् भूमावास्तीर्य स्वधां वाचयिष्ये । वाच्यतां इतिप्र० । पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः स्वधोच्यतां । अस्तु स्वधा इति उच्यमाने स्वधावाचनीयदर्भेषु प्रतिपिंडं उर्जंवहंति० पितॄन् । इति मंत्रावृत्त्याजलंनिषिंचेत् । ततोन्युब्जं पात्रमुत्तानं कृत्वा यथाशक्तिदक्षिणां दद्याद्ब्राह्मणेभ्यः । सव्यं अस्मत्पित्रादि संबंधिभ्यः । कामकालसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः सापिंडीकरणश्राद्धप्रतिष्ठासिध्यर्थं इमां प्रतिनिधिभूतां दक्षिणां यथाविभवं संप्रददे नमम । अपसव्यं-अ० गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अ० शर्मभ्यः वसु० पेभ्यः सापिंडी० इमां रजतप्रतिनिधिभूतां दक्षिणां संप्रददे नमम । सव्यं । विश्वेदेवाः, प्रीयंतां, प्रीयंतांवो विश्वेदेवाः । शांतिदापुष्टिदास्तुष्टिदावरदाभवंतु, भवंतुशांतिदा० वरदाः । अन्नंचनो बहुभवेत् । भवतुवो बह्वन्नं । अतिथींश्चलभेमहि, लभध्वमतिथीन् । याचितारश्चनः संतु, संतुवो याचितारः । मायाचिष्म कंचन, कंचने मायाचध्वं । एता आशिसत्याः संतु, संत्वेता आशिषः सत्याः । गोत्रस्याभिवृद्धिरस्तु, अस्तु गोत्रस्याभिवृद्धिः । समस्तपितॄणां

प्रसादोऽस्तु अस्तुपितॄणां प्रसादः । ततः-नित्यानुष्ठानसि० इति तिलकंधृत्वा पिंडान्नमस्कृत्य (अत्रावसरे संकल्पपूर्वकं मोक्षधेनुं विधिवद्दत्वा) पिंडोद्धारणं त्रीन्समुद्रां० अयोध्या० । उखायामेवनिधानं । उल्मुकसकृदाच्छिन्नदर्भाणामग्नौप्रक्षेपः पिंडस्थाने शांतिरस्तु, पुष्टिरस्तु, तुष्टिरस्तु इति प्रतिमंत्रंजलं प्रक्षिप्य भोजनपात्राणि पितृपूर्वकं चालयेत् । वाजेवाजे० यानैः । उत्तिष्ठंतु पितरः (सव्येन) विश्वेदेवैः सह इति पितृद्विजपूर्वकं विसृजेत् । ततो गच्छतो विप्रान् पादप्रक्षालनमंडलपर्यंतं आमावाजस्य० गम्यात् । इत्यनुव्रज्य । कर्मपात्रावशिष्टजलधारां पातयन् प्रदक्षिणकृत्य पवित्रंत्यक्त्वाचम्य विप्रहस्तेषु अक्षतपुष्पादिदत्वा वाग्यतोदक्षिणामुखस्तिष्ठेत् । आशीर्वादमंत्रान्तेच पठेयुः-द्वेसृती अ० सुधत्त । आयुः प्रजां० एताः सत्या आशिषः संतु गोत्रस्याभिवृद्धिरस्तु । इति द्विजैराशीर्मंत्रपठणपूर्वकंदत्तमक्षतादि शिरसिधृत्वा विप्रान् पादाभ्यंगप्रियोक्तिभिश्च प्रतोष्य प्रार्थयेत । अद्यमेस० विप्राणां (भवतां) वचनादस्तु संपूर्णसकलंहितत् । इति, अस्तुसंपूर्णमितिप्र० आमंद्रैरिंद्र० । पिंडानामप्सु प्रक्षेपः । यस्यस्मृत्या० अनेन सापिंडिकरणश्राद्धकर्मणाभगवान् पितृरूपी जनार्दनो वासुदेवः प्रीयतां । इदंविष्णुर्वि०ऋचंवाचं । प्रतिद्विजस्थापितदीपनिर्वासनादि ।

सपिंडीकरणश्राद्धसंपूर्त्यर्थं श्रीविष्णोः षोडशोपचारैः पूजनं। स्नानं द्वादशाहांतधारितवस्त्राणां त्यागः। आचार्याय दानं च इति सपिंडीकरणं॥

॥ पाथेयश्राद्धं॥

सपिंडनात्परेदिने तद्दिनेवा देशकालौ संकीर्त्य प्राचीनावीती अमुकगोत्रस्यामुकशर्मणः अस्मत्पितुः प्रेत लोकात् पितृलोकगमने सुखसिध्यर्थं अ० गोत्राणां पितृ-पितामहप्रपितामहानां अ० शर्मणां वसु० स्वरूपाणां पाथेय श्राद्धं सदैवं सपिंडं पार्वणविधिनाकरिष्ये। इतिसंकल्पः शिष्ट प्रकृतिवत्। इदं पक्वान्नेन आमेनवाकुर्यात्। आमपक्षे पाथेयश्राद्धं सदैवं सपिंडं आमेन हविषा करिष्ये इति संकल्पः। अन्यत्पार्वणवत्कुर्यात्। पाकप्रोक्षणस्थाने आम प्रोक्षणं। आवाहनमंत्रे उशंतस्त्वा० पितॄन्हविषे स्वीकर्तवे' इत्यूहः। भस्ममर्यादांतं प्राग्वत् तंडुलैरग्नौकरणं। अन्ना-च्चतुर्गुणं द्विगुणं समंवा आमंदेयं। इदमामं निवेदये। यथासुखंजुषध्वमित्यस्य आपोशनप्राणाहुतितृप्तिप्रश्नानांच-लोपः गृहसिद्धान्नेन पायसेनतंडुलसक्तुनावा पिंडदानं। केचित्त्विदं श्राद्धं केवलपिंडदानविधिनाहुः। तत्र विधिः पाथेयश्राद्धं पिंडदानविधिना करिष्ये इति संकल्पः। नीवी बंधनं। रेखाकरणं। अवनेजनादि पिंडपूजनांतं सर्वमवि-

कृतं कृत्वा चंदनादि तिलकंधृत्वा पिंडनमस्कारः । उरवाव निघ्रणादि पिंडानां विसर्जनं जलेप्रक्षेपश्च । पिंडदानविधिः श्रा मार्तंडेऽपि संक्षेपितो निरूपितः ।

॥ त्रयोदशादिनविधिः ॥

त्रयोदशेऽहनि कर्ता तैलाभ्यङ्गपूर्वकं स्नात्वा देश कालसंकीर्तनांते ममास्मिन् गृहेकुलेच अमुकनिधनोत्पन्ना-रिष्टाशुचिद्वारा अस्यवास्तोः शुभतासिध्यर्थं अस्मद्गोत्रीय सकुल्यनां बालवृद्धसमेतानां मङ्गलाभ्युदयार्थं अकालमृत्यूप-शमनपूर्वकं दीर्घायुरारोग्यतावाप्तये श्रीपरमेश्वरप्रीत्यर्थं श्री-गणेशपूजनपूर्वकं स्वास्तिवाचनं करिष्ये । इतिसंकल्पः । गणपतिं षोडशोपचारैः संपूज्य पुण्याहवाचनांते स्थापित कलशोदकेन यजमानस्य सपरिवारस्याभिषेकः । नूतनवस्त्र-धारणं । ततोऽशुभनिवृत्याचंदनादिभोगधारणाधिकारार्थं सदक्षिणानि चंदनपुष्पफलतांबूलगुडदानादिकरिष्ये । इति संकल्प्य तानि कृत्वा कुलदेवतामिष्टदेवतादींश्चनत्वा गण-पतिं वरुणांच विसृज्य द्विराचम्य ब्राह्मणैः सहस्वयंबंधुयुतो भुंजीत । श्रीखंडंधृत्वा तांबूलादिभक्षायित्वा भूयसीं दक्षि-णां दद्यात् । आचार्यं वस्त्रदक्षिणादिभिः तोषयेत् ॥

॥ उदकुंभश्राद्धं ॥

देशकालौस्मृत्वा अपसव्यं । अ० गोत्राणां पितृपितामह

प्रपिमामहानां अ० शर्मणां वसु० स्वरूपाणां उदकुंभश्राद्धं कारिष्ये इति संकल्प्य अदैवं संकल्पविधिनापार्वणवत्कुर्यात् । सकल्पक्षणपाद्यासनगंधाच्छादनांतपूजान्नपरिवेषणांत एषउद कुंभः इदमन्नंचदत्तमित्यादित्यागविधः । अंते तांबूल दक्षिणादि ॥

॥ मासिकानिवृत्ति ः

द्वादशाहसपिंडीकरणपक्षतत्प्रागपकृष्य कृतान्यपि सपिंडीकरणोत्तरं स्वस्वकाले मासिकश्राद्धानि सपिंडीकरणोत्तरं पार्वणविधिना कर्तव्यान्येव । वृद्धिप्राप्तौ च तेषामप्य-पकर्षणकरणं आवश्यकं । तत्रविधिः । आचमनं । प्राणा-यामः । पवित्रधारणं देशकालयोः कीर्तनं । अपसव्यं । अ० गोत्राणां पितृपितामहप्रपितामहानां अ० शर्मणां वसु० रू-पाणां ऊनमसिकाद्यूनाद्बिकांतानि पंचदशमासिकश्राद्धानि वृध्यादिनिमित्तं स्वस्वकालादपकृष्य सदैवानि सापिंडानि पार्वणेनविधिनान्नेनहविषा तंत्रेण कारिष्ये इति संकल्पः । पुरूरवाद्रवावत्र विश्वेदेवाः यदिमरणादारभ्य द्वादशमास-मध्ये कश्चिदधिकमासस्तदातन्मासिकं द्विवारं कार्यं । तेन षोडशश्राद्धानि भवंति । पंचदशश्राद्धेषु पिंडाः पंचचत्वारिं-शत् । षोडशश्राद्धेषु अष्टचत्वारिंशत् । केचित्तु मासिक श्राद्धेषु अपकृष्य कृतेषु पंचदशश्राद्धार्थं पिंडत्रयमेवमिति

वदंति । शिष्टाचारोऽपि तथैव दृश्यते । अत्रप्रमाणं पुनः सुधियएव । द्वादशाहसपिंडनपक्षे त्रयोदशाहादौ आद्य मासिकसहितानां षोडशानां पुनरावृत्तिं कुर्वतांतु मूलंभ्रम एव । अपकृष्यकृतानामेव पुनरावृत्तिस्मरणात् ॥

॥ अद्बपूर्तिश्राद्धं ॥

इदंच वर्षांत्यदिने भवति । अस्यैव संवत्सरविमोक्ष श्राद्धमित्यर्थांतरं इदंच पार्वणविधिनैवकार्यं । एतदूनाब्दिकांत षोडशश्राद्धेभ्यो भिन्नमेव । अतएवास्यप्रेतश्राद्धत्वाभावात् वृद्धिप्राप्तावपिनापकर्षः प्रेतश्राद्धत्वाभावादस्याप्यपकर्षं वदन्तो भ्रान्ता एव । अत्र प्रयोगः-देशकालयोः कीर्तनांते अपसव्यं । अ० गोत्राणां पितृपितामहप्रपितामहानां अमुक शर्मणां वसु० रूपाणां अद्बपूर्तिश्राद्धं सदैवं सपिंडं साग्नौ-करणं पार्वणनविधिनान्नेन हविषा युष्मदनुज्ञया सद्यःकरिष्ये इति संकल्पः । पुरूरवार्द्रवावत्रविश्वेदेवाः । शिष्टंप्रकृतिवत् ॥

॥ दुर्मरणोदकदानविधिविचारः ॥

शास्त्रानुज्ञामंतराऽग्निविषजलपाषाणभृगुपातानशना-दिभिर्बुद्धिपूर्वकं स्वेच्छात्मघातकानां, चौर्यादिदोषेराजहता-नां, पारदार्येतत्पत्यादिहतानां, विद्युद्धतानां, अन्यैर्निषेधि-तेऽपिगर्वान्नदीतरणवृक्षारोहणकूपावरोहादौ प्रवृत्तानां मृता-नां, गवादिहरणार्थं तद्धननार्थंवा प्रवृत्तानां . गोसर्पनाखि

शृंगिदंष्ट्रिगजचोरविप्रांत्यजादिभिर्हतानां, महापातकिनां, तत्संसर्गिणां, महापापितुल्यानां, च पतितानां, नपुंसकानांच पत्यादिहंत्रीणां, हीनजातिगामिनीनां, गर्भघ्नीनां कुलटानां, पूर्वोक्तात्मघातादिपापयुक्तानांच स्त्रीणांच मरणे अशौचं, शवस्पर्शं, अश्रुपातं, वहनं, दहनं अंत्यकर्मच नकुर्यात् । स्पर्शादिनिमित्तकप्रायाश्चित्तानि ग्रंथांतरादवसेयानि । मृतानां तेषां देहस्य जले प्रक्षेपः । ततः संवत्सरोत्तरं पुत्रादिस्तदीयात्मघातादिपापानुसारेण प्रायश्चित्तं तस्य कृत्वा नारायणबलिंच कृत्वा पर्णशरदाहादिपूर्वकमाशौचमौर्ध्वदेहिकंचकुर्यात् । प्रेतशरीरं दग्ध्वादाहनिमित्तं चांद्रायणत्रयंकृत्वाऽस्थीनिसंस्थाप्याद्बांते पूर्वोक्तविधनौर्ध्वदेहिकं कार्यमितिकेचिद्वदंति । अथवा लौकिकाग्निना तूष्णींदग्ध्वा स्वजीवनसंदेहाद्वा भक्त्यावा पुत्रादयः संवत्सरादर्वागपितत्तदात्मघातादिपापोक्तद्विगुणप्रायश्चित्तपूर्वकं नारायणबलिं कृत्वा पर्णशरदाहमस्थिदाहंवा कृत्वाऽशौचमौर्ध्वदेहिकंच कुर्युः । इदंच प्रायश्चित्तार्हाणामेव । प्रायश्चित्तानर्हाणां घटस्फोटेन बहिष्कृतानांच दासीद्वारा पतितोदकविध्यनंतरं सपिंडीकरणवर्जमौर्ध्वदेहिकं । तेन सांवत्सरीकमप्येकोद्दिष्टेनैव । यद्वात्मघातिनां पुत्रादिमृतजातीयवधोक्तं ब्रह्महत्यादिप्रायश्चित्तसहितं चांद्रायणं तप्तकृच्छ्रद्वयंच कृत्वा

नारायणबलिपूर्वकं तंदहेत् । तथाचात्मघातिनां गोगज-
व्याघ्रादिहेतुकदुर्मरणवतांच पतितादीनांच पूर्वोक्तानां सर्वे-
षां नमरणदिनादारभ्याशौचं किंतुतत्प्रायश्चित्तनारायणबलि
पूर्वकसमंत्रकदाहादिनमारभ्यैवाशौचं जलाग्न्यादिभिः प्रमा-
दमृतानांतु मरणदिनादारभ्याशौचादिकमस्त्येव तच्च त्रिरात्रं ।
दशाहमितिबहवः । किंतुप्रमादमरणस्यापि दुर्मरणत्वात्तन्नि-
मित्तप्रायश्चित्तपूर्वकमेवदाहादिकार्यं । स्मृत्यर्थसारे। चांडाल
गोब्राह्मणचोरपशुदंष्ट्रिसर्पाग्न्युदकादिभिः प्रमादान्मरणे चां-
द्रायणं तप्तकृच्छ्रद्वयं पंचदशकृच्छ्राणिवा प्रायश्चित्तं कृत्वा
विधिवद्दहनाशौचोदकदानादिसर्वं कार्यमेवेत्युक्तं। प्राणांतिक
प्रायश्चित्तेन मृतस्य दशाहमाशौचं सर्वाणि प्रेतकर्माणि कर्त-
व्यानि । प्रायश्चित्तेनैवतस्यशुद्धित्वात् । एवमारब्धप्राय-
श्चित्तस्य प्रायश्चित्तमध्ये मरणेऽपि शुद्धित्वादिकंज्ञेयं ।
आहिताग्नेस्तुपतितादेर्मरणे चांडालश्रृंगिचोरादिमरणेविशेषः ।
त्रेताग्नीन् प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे । पात्राणि तुदहे-
दग्नौ साग्निके पापकर्मणि । ततः प्रायश्चित्तार्हत्वानर्हत्वादि
पूर्वोक्तव्यवस्थया निर्मथ्याग्निना दाहाद्यंतकर्मेति । महा
पातकसंयुक्तः साग्निको यदि जीविति । पुत्रादिः
पालयेदग्नीन् प्रायश्चित्तक्रियावधि । प्रायश्चित्तंनकुर्याद्यः
कुर्वन्वाम्रियतेयदि । जलेग्नीन् प्रक्षिपेदग्नौ पात्राणितु

जलेषुवा । माधवीये, आहिताग्नेर्दुर्मरणेष्वात्मघातेच तंलौकिकाग्निना तूष्णींदग्ध्वा तदस्थीनिक्षीरेणप्रक्षाल्यतत्प्रायश्चित्तंकृत्वा श्रौताग्निभिः समंत्रकं दाहादिकार्यमित्युक्तं । इदं निरग्नेरपि दुर्मरणेयोज्यं । प्रमादेनदर्पादिनावा सर्पतो मृतौ आशौचादिकं नकार्यं । नागपूजाव्रतंकृत्वा नारायणबलिसौवर्णनागदानप्रत्यक्षगोदानानि कृत्वादाहाशौचादि कार्यं ॥

॥ दुर्मरणे पतितादिमरणेच प्रायश्चितानि ॥

तत्र, बुद्धिपूर्वकमात्मघातेन मृतानां । त्रिंशत्कृच्छ्राणि प्रायश्चित्तं । एतच्च जातिवधप्रायश्चित्तेन समुच्चितं कार्यं । यथाब्राह्मणेनात्मघाते कृते द्वादशाब्दब्रह्महत्या प्रायश्चित्तं त्रिंशत्कृच्छ्रमात्मघातप्रायश्चित्तंच तत्पुत्रादिःकुर्यात् । ब्राह्मणस्त्रियात्मघातेकृते ब्राह्मणस्त्रीवधप्रायश्चित्तं त्रिंशत्कृछ्राणिच । अशक्तावात्मघाते चांद्रायणद्वयंतप्तकृच्छ्रचतुष्कंच । प्रमादेन जलादिमरणेपंचदशकृच्छ्राणि चांद्रायणपूर्वकं तप्तकृच्छ्रद्वयं । पतितेमृते षोडशकृच्छ्राणि । ब्रह्महत्यादिपापिनां प्रायश्चित्तात्पूर्वमरणे । तत्प्रायश्चित्तं पुत्रेण कार्यं । प्रायश्चित्तानर्हाणांतु पतितोदकदानविधिरेव नप्रायश्चित्तादि । सिंधौतु, प्रायश्चित्तानर्हाणामपि पुत्रादिर्नारायणबलिपूर्वं सर्वमौर्ध्वदेहिकं सपिंडीकरणं दर्शादिश्राद्धं गयाश्राद्धं कुर्यादेव । एव म्लेंछी

कृतस्यापि पतितोदकविधिरपुत्रविषयः । इति उक्तं । युक्त-मेतत् । यस्तु किंचित्कालं म्लेंछीकृतः प्रायश्चित्तार्हः तस्य षोडशकृच्छ्रादिप्रायश्चित्तं पुत्रेण कृत्वा पर्णशरदाहादि कार्यं । प्रमादभिन्नमरणेषु चौर्यपारदार्यादिहेतुकेषु मरणेषु चांद्रायण द्वयं तप्तकृच्छ्रंवेत्याकरतो विचार्य योज्यं ॥

॥ दुर्मरणनिमित्तदानानि ॥

व्याघ्रहते विप्रकन्याविवाहः । गजहते चतुर्निष्क परिमितहेमनिर्मितगजदानं । राजहते सौवर्णपुरुषदानं । चोरहते प्रत्यक्षधेनुदानं । वैरिहते वृषभदानं । वृषभहते यथाशक्ति हेमदानं । शय्यायां मृतौ निष्कहेमनिर्मितविष्णु प्रतिमाधिष्ठि तातूलिसमान्विताच शय्या देया । शौचहीन मरणेद्विनिष्कहैमविष्णुदानं । संस्कारहीनमरणे विप्रपुत्रोप नयनं । अश्वहते निष्कत्रयहैमाश्वदानं । शुनाहते क्षेत्रपाल स्थापनं । सूकरहते महिषदानं । कृमिकीटादिभिर्हते पंच खारीमितगोधूमदानं । वृक्षहते वस्त्रयुतसौवर्णदानं । शृंगिणा हते वस्त्रयुतवृषभदानं । शकटहते सोपस्करं किंचित् द्रव्यदानं । भृगुपातमृते धान्यपर्वतदानं । अग्निनामृते उद-पानोत्सर्गविधिः । काष्ठहते धर्मार्थसभाकरणं । शस्त्रहते महिषीदानं । अश्मनाहते सवत्सपयस्विनीगोदानं । विषेण

हते हेमनिर्मितपृथ्वीदानं । उद्बंधनेनमृते हैमकापिदानं । जलमृते द्विनिष्कहेमनिर्मितवरुणदानं । विषूचिकामृते स्वाद्वन्नेन शतविप्रभोजनं । कंठस्थितकवलस्य मरणे घृतधेनुदानं । कासरोगमृते अष्टकृच्छ्राणि । अतिसारमृते लक्ष गायत्रीजपः । शाकिन्यादिग्रहैर्मृते रुद्रैकादशीनीजपः । विद्युत्पातमृते विद्यादानं । अंतरिक्षमृते वेदपारायणं । पतिते मृते षोडशकृच्छ्राणि । अस्पृश्यस्पर्शयुक्तमरणे सच्छास्त्र पुस्तकदानं । इतो विशेषस्त्वाकरादवसेयः । अत्र शय्या मरणे। शौचहीनसंस्कारहीनमरणे कृमिविषूचिकाकंटककवलकासातिसाररोगग्रहणैर्मरणेंऽतरिक्षमृतेऽस्पृश्यस्पर्शमरणेऽपि--दानविधिरेव नप्रायश्चित्तं नैव नारायणबलिः । नापिवर्षादि कालप्रतीक्षा । व्याघ्रादिहेतुकं विषजलशस्त्रादिहेतुकंच मरणं प्रमादेन दर्पादिना बुध्याचेत्यनेकधा संभवति तत्रोक्त व्यवस्थया प्रायश्चित्तं नारायणबलिदानादिविधिश्चेतित्रयाणां समुच्चयः । यदि पुत्रादिः पितुर्जलादिदुर्मरणप्रायश्चित्तं ब्रह्म हत्यादितत्तत्प्रायाश्चित्तंवात्मघातप्रायश्चित्तंवा कर्तुं नशक्नोति तदोक्तदानादिविधिं नारायणबलिंच कृत्वा, अत्यशक्तौ नारायणबलिमात्रं कृत्वौर्ध्वदेहिकं कुर्यात् । तावतापुत्रादि सपिंडानां शुद्धिसिद्धिः । पित्रादेस्तु पुत्रादिभिस्तत्तत्प्रायश्चित्ताकरणे नरकादिभोगःस्यादेव । इति ॥

॥ दुर्मरणे प्रायश्चित्तांगनारायणबलिः ॥

शुक्लैकादश्यां आचम्यप्राणानायम्य देशकालौ संकीर्त्य । अमुकगोत्रस्य अमुकशर्मणोः दुर्मरणात्मघातजदोष नाशार्थं और्ध्वदेहिकसंप्रदानत्वयोग्यतासिध्यर्थं नारायणबलिं करिष्ये । इति संकल्प्य विधिवत्पंचकुंभान् संस्थाप्य तेषु सुवर्णमयप्रतिमायां इदंविष्णुरितिविष्णुं । द्वितीयकुंभे रौप्य प्रतिमायां ब्रह्मजज्ञानमिति ब्रह्माणं । तृतीयकुंभे ताम्रप्रातिमायां नमस्तेरुद्रेतिरुद्रं । चतुर्थकुंभे लोहप्रतिमायां यमायत्वेतियमं । पंचमकुंभे दर्भमयप्रतिमायां प्रेताजवता इति प्रेतंचावाह्य षोडशोपचारैः पुरुषसूक्तेन पूजयेत् ॥ सुवर्णमय्यो वा सर्वाः प्रतिमा अत्र ग्राह्याः । तत स्थंडिले अग्निंप्रतिष्ठाप्य ध्यानादिवैकल्पिकावधारणांते अन्वाधानं कुर्यात् ॥ इंद्रं । अग्निं । सोमं । एता आज्येन । अथ प्रधानं ॥ नारायणं पुरुषसूक्तेन प्रत्यृचं एकैकयाचर्वाहुत्या ॥ शेषेणाग्निं स्विष्टकृतमित्यादि० नारायणबलिहोमकर्मणि अहंयक्ष्ये ॥ दाक्षिणतो ब्रह्मासनमास्तीर्येत्यादिचरुं श्रपयित्वा आज्यभागांते पुरुषसूक्तेन प्रत्यृचं इदं नारायणायनममेतित्यागपुरःसरमेकैकां चर्वाहुतिं हुत्वा स्विष्टकृदादिहोमशेषं समापयेत् ॥ ततो देवानामग्रे दक्षिणाग्रदर्भेषु सव्येनैव अमुकगोत्र अमुक शर्मन् प्रेत विष्णुरूपायायं ते पिंड उपतिष्ठतां ॥ इति मधु

घृततिलयुतान्दशपिंडान्दत्वा पुरुषसूक्तेनाभिमंत्र्य तेनैव शंखोदकेनाभिषिच्य पूजयेत् ॥ ततः पुरुषसूक्तेन अमुकशर्माणं अमुकगोत्रं विष्णुरूपं प्रेतंतर्पयामि इति प्रत्यृचंतर्पयित्वा ॥ ब्रह्मविष्णुमहादेवा यमश्चैवसकिंकरः ॥ बलिंगृहीत्वा कुर्वंतु प्रेतस्यच शुभांगातिम् ॥ इति एकमामान्नं ब्रह्मादिपंचभ्यो दद्यात् ॥ मिताक्षरायांहोमबल्यादिनोक्तं ॥ ततः प्रतिदैवतंत्रिविधंफलं शर्करामधुगुडघृतानि निवेद्य पुनः पिंडानभ्यर्च्य ॥ उद्धृत्य जलेक्षिपेत् ॥ रात्रौ नवसप्तपंचवा विप्रान् निमंत्र्योपोषितो जागरं कृत्वा द्वितीयेऽहनि पुनर्विप्रादीन् संपूज्य ॥ देशकालौ संकीर्त्य अ०गोत्रस्य अ०शर्मदुर्मरणजनितदोषनाशार्थं और्ध्वदेहिकसंप्रदानत्वयोग्यतासिध्यर्थं संकल्पितनारायणबल्यंगभूतं श्राद्धपंचकं एकोद्दिष्ट विधिना करिष्ये ॥ इत्युक्त्वा विष्णुब्रह्मशिवयमप्रेतान् स्मरन् विप्रान् दर्भबटून्वोपवेश्य प्रेतस्थानेचैकं विष्णुंस्मरन्पाद्यावाहनार्घ्ययुतं तृप्तिप्रश्नांतं कृत्वा रेखाकरणादिकृत्वा अन्नशेषेण विष्णवे ब्रह्मणे शिवाय यमाय सपरिवाराय चतुरःपिंडान्दत्वा अ० गोत्र अ० शर्मन् प्रेत विष्णुरूपाय अयं ते पिंड उपतिष्ठतां इतिपंचमपिंडं दत्वाऽभ्यर्च्य आचांते दक्षिणांदत्वा एकं प्रेतंस्मृत्वाविशेषतः संतोष्य विप्रैः अमुक गोत्राय अमुकशर्मणे प्रेताय इदं तिलोदकमुपतिष्ठतां इति

सतिलमुदकं दापयित्वा विप्रालाभेस्वयंदद्यात्॥ अनेन नारायणबलिकर्मणा भगवान् विष्णु अ० गोत्रं अ० शर्माणं प्रेतं शुध्यं अपापं और्ध्वदेहिककर्माहंच करोतु इति वाचयित्वा विष्णुस्मरणपूर्वकं कर्म समाप्य भुंजीत् ॥ अत्र विशेषस्तु ग्रंथांतरावदवगतव्य इति दुर्मरणांगनारायणबलिविधिः ॥

॥ सर्पहतेव्रतं ॥

तत्संवत्सरे श्रावणशुक्लपंचमिं अन्यावा शुक्ल पंचमी आरभ्य पंचम्यां उपवासं चतुर्थामेकभक्तं पंचम्यां नक्तंवाकृत्वा दारुमयं मृणमयं वा फणापंचकयुतं नागं निर्माय गंधै करवीरशतपत्रजातीपुष्पैः धूपैर्दीपैर्नवेद्यैश्च अनंतं १, वासुकिं २, शंखं ३, पद्मं ४, कंबलं ५, कर्कोटकं ६, अश्वतरं ७, धृतराष्ट्रं ८, शंखपालं ९, कालियं १०, तक्षकं ११, कपिलं १२च द्वादशमासेषु प्रतिमास एकैकं नाम मंत्रेणशुक्ल पंचम्या संपूज्य ब्राह्मणान् घृतपायसमोदकैर्भोजयेत् । संवत्सरांते चैवं संपूज्य महाब्राह्मणभोजनं कुर्यात् । शक्त्या सौवर्णनागं गोदानंच कुर्यात् । अथवो भयोः पक्षयोः पंचमीषु भूमौ पिष्टेन नागं विलिख्य सितगंधसितपुष्पसिततंघदुलैरभ्यर्च्य गव्यं क्षीरं मोदकंच भूमौ निवेद्योपस्थायैवं वदेत् । "मुंचमुंचाऽमुकं", इति तद्दिने मधुरमश्नियात् एवं विधिना नागमभ्यर्च्य संवत्सरांते

यथाशक्ति सौवर्णनागं प्रत्यक्षांगाचं दद्यात् ततोऽनंतरोक्त नारायणबलिं कृत्वादाहाशौचादिकं कार्यं ॥

॥ ब्रह्मचारीमरणविधिः ॥

ब्रह्मचारिणो मृतिसंभावनायां मरणोत्तरं तिथ्यादि संकीर्तनांते अ० गोत्रस्य अ० नाम्मो मतस्यम्रीयमाणस्यवा ब्रह्मचारिणो अवकीर्ण दोषनिवृत्यर्थं द्वादशाब्द षडब्द याऽब्द- न्यतमप्रायश्चित्तं प्रतिप्राजापत्यं अमुकगोत्र निष्क्रिय प्रत्याम्नायद्वारा सद्यःसूतकांतेवाऽहयचरिष्ये इति संकल्प्य ॥ संकल्पितप्रायश्चित्तंमाचरेत् ॥ ततः पुनर्देशादि कीर्तनांते अपसव्यं अ० गोत्रस्य अ० नाम्नो ब्रह्मचारिणा ब्रह्मचर्याश्रमेण मरणसूचित दुर्गतीनिवृत्तिद्वारा ब्रह्मसायुज्यसिद्धये ममकुलस्याभिवृध्यर्थं सद्गतिसिध्यर्थंच त्रिंशभ्यो ब्रह्मचारिभ्यः प्रत्येकं कौपीनादि पदार्थान्दास्ये इति संकल्प्य ब्रह्मचारिणोवृत्वा कौपीनांगुलीयक कर्णकुंडलकृष्णाजिन पादुकाच्छच माला गोपीचंदनमणिप्रबालमाला यज्ञोपवीतंच पदार्थान् अमुकगोत्राय अ० नाम्ने ब्रह्मचारिणे तुभ्यमहं संप्रददे इति दद्यात्संकल्पेद्वा एवं त्रिंबभ्यो ब्रह्मचारिभ्यः असंभवे साधुग्रहस्थेभ्योवा दद्यात् ॥ ततः पुनर्देशादिकीर्तनांत अमुकनाम्ना ब्रह्मचारिणोव्रत विसर्गं करिष्ये ॥ तदंगत्वेन हिरण्येन नांदीश्राद्धंच करिष्ये इति संकल्प्य स्थंडिलाद्यग्नि

पूजांते अन्वाधानं कुर्यात् । अथदेवताभिध्यानं प्रजापतिं ॥ इंद्रं॥ अग्निं सोमं एता आज्येन॥ अथ प्रधानं ॥ अग्निं वायुं प्रजापतिं ॥ अग्निं व्रतपतिं अग्निव्रतानुष्ठानफलसंपादनम् विश्वान्देवान् एताः प्रत्येकमेकैकयाहुत्याज्येन ॥ अग्निंवायुंसूर्यमित्यादि शेषेणाग्निं स्विष्टकृतं ॥ अस्मिन्न्मृतस्य ब्रह्मचारिणोव्रतविसर्ग होमकर्मण्यहंयक्ष्ये॥ दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि । आज्यभागांते । आज्येन भूःस्वाहा इदमग्नये नमम ॥ भुवःस्वाहा इदंवायवेनमम॥ स्वःस्वाहा इदंसूर्यायनमम ॥ भूर्भुवः स्वःस्वाहा इदं प्रजापतयेनमम ॥ अग्नयेव्रतपतयेस्वाहा इदमग्नये व्रतपतयेनमम ॥ अग्नयेव्रतानुष्ठान फलसंपादनाय स्वाहा । इदमग्नयेव्रतानुष्ठानफलसंपादनायनमम ॥ विश्वेभ्यो देवेभ्यःस्वाहा इदं विश्वेभ्योदेवेभ्योनमम ॥ इति हुत्वा ॥ भूरादिहोमशेषं समापयेत् ततोऽर्कशाखामुपेत्य गृहावो आनीय देशादिसंकीर्त्य अ० गोत्रस्य अ० शर्मण और्ध्वदेहिकाधिकारसिध्यर्थं अर्कविवाहं करिष्ये ॥ तदंगत्वेन मातृकापूजनादि नांदीश्राद्धं हिरण्येनं करिष्ये इति संकल्प्यातानि समाप्य अर्कब्रह्मचारिणौ हरिद्रयानुलिप्य पीतसूत्रेणावेष्ट्य वस्त्रयुग्मेनाच्छादयेत्॥ ततः स्थंडिलकरणादि अग्निपूजांतेऽन्वाधानं कुर्यात्॥ अथ देवताभिध्यानम्॥ प्रजापतिं॥ इंद्रं॥ अग्निं ॥ सोमं॥ एता आज्येन॥ अथ प्रधानं॥ अग्निं

बृहस्पतिं विवाहविधियोजकं कामं अग्निं वायुं सूर्यं प्रजापतिं एताः प्रत्येकमेकैकयाज्याहुत्या अग्नि वायुं सूर्यमित्यादि स्विष्टकृतंचास्मिन् अ० शर्मणो ब्रह्मचारिणो अर्कविवाह कर्मण्यहं यक्ष्ये । दक्षिणतो ब्रह्मासनमास्तीर्येत्याज्यभागांते आज्येन ॐ अग्नयेस्वाहा इदमग्नयेनमम । बृहस्पतये स्वाहा इदंबृहस्पतयेनमम । विवाहविधियोजकायस्वाहा इदं विवायविधियोजकायनमम यस्मैत्वा कामकामायवयं सम्राड्यजामहे! तमस्यभ्यं कामंदत्वा यथेदंघृतं पिवस्वाहा । इदंकामाय० । भूःस्वाहा इदमग्ये० भुवःस्वाहा इदंवायवे० स्वःस्वहा इदं सूर्याय० भूर्भुवःस्वःस्वाहा इदं प्रजापतयेनमम इतिहुत्वा भूरादिस्विष्टकृदांता आहुतीश्चहुत्वा होमशेषं स्विष्ट समापयेत् ततोर्कशाखां ब्रह्मचारिशवं चकपालाग्निना तुषाग्नि नावा विधिवद्दहेत् । शाखांप्रवाहयेद्वा । इतिब्रह्मचारि मरणविधिः ॥

॥ स्नातकमरणविधिः ॥

स्नातकस्यमरणसंभावनायां मरणेवा कर्ता आचम्य प्राणानायम्य देशादिसंकीर्त्य अ०गोत्रस्य अ० नाम्नो म्रियमा-णस्य मृतस्यवा स्नातकस्यावकीर्णदोषानिष्क्रृत्यर्थं यथाशक्ति कृच्छ्रत्रयप्राजापत्यप्रायश्चित्तं गोनिष्क्रयप्रत्याम्नायद्वारासद्यःसूत कान्तेवाऽहमाचरिष्ये । इति संकल्प्य सद्यःपक्षे प्रायश्चित्तं

कृत्वा अर्कशाखासमीपे गत्वा शाखांवागृह आनीय आचमनादिदेशादिसंकीर्तनांते अ० गोत्रस्य अ० शर्मणः स्नातकस्यमृतस्य और्ध्वदेहिकाधिकारासिध्यर्थं अर्कविवाहं करिष्ये तंदगत्वेन मातृपूजादिहिरण्येन नांदिश्राद्धं करिष्ये इति संकल्प्य अर्कस्नातकौ हरिद्रयानुलिप्य पीतसूत्रेणावेष्ट्य वस्त्रयुग्मेनाच्छादयेत् । ततः स्थंडिलेग्निंप्रतिष्ठाप्य संपूज्यान्वाधानं कुर्यात् । अथ देवताभिध्यानं, प्रजापतिं इंद्रं अग्निं सोमं एता आज्येन । अग्निं बृहस्पतिं; विवाहविधियोजकं, कामं, अग्निं, वायुं, सूर्यं, प्रजापतिं, च एताः प्रत्येकं एकैकयाज्याहुत्या । अग्निं वायुं इत्यादि स्विष्टकृतं च अस्मिन् अ० गोत्रस्य अ० शर्मणो मृतस्य स्नातकस्य और्ध्वदेहिकाधिकारासिध्यर्थं अर्कविवाहकर्मण्यहंयक्ष्ये । दक्षिणतो ब्रह्मासनमास्तीर्येत्यादि आज्यभागांते ब्रह्मचारिमरणविधानोक्तविधिना प्रधानहोमादिहोमशेषसमापनांतेऽर्कशाखां शवंच दहेत् । शाखां जले प्रवाहयेद्वा ॥

## ॥ कुष्ठीमरणविधिः ॥

मृतस्यकुष्ठिनोदेहस्य तीर्थे भुवित्वानिक्षेपः । दाहोदकपिंडदानादि तस्य निषिद्धं । स्नेहाच्चिकीर्षायां शक्त्यनुसारेण षडब्दादिप्रायश्चित्तंकृत्वा कुष्ठादिमहारोगमृतस्य दाहादि

क्रियां कुर्यात् । नान्यथा । सिंधौतु अकृतप्रायश्चित्तकुष्ठ्या-दिदाहे षडब्दादिप्रायश्चित्तंकार्यमिति ॥

॥ रजस्वलासूतिकयोर्मरणविधिः ॥

रजस्वलायाः शुद्धिकर्ता तिथ्यादिकीर्तनांते अमुक गोत्रायाः अमुकनाम्न्याः रजस्वलावस्थायां मरणजनितदोष परिहारार्थं और्ध्वदेहिकाधिकारसिध्यर्थंच चांद्रायणत्रयात्मकं पंचदशप्राजापत्यप्रायश्चित्तपूर्वकं पंचगव्यैरष्टोत्तरशतस्नानानि कारयिष्ये इति संकल्प्य कुंभे उदकं कृत्वा तत्र पंचगव्यं प्रक्षिप्य आपोहिष्ठा० ३ इदमापः० इत्यादि पुण्यर्भिरभि-मंत्र्य ब्राह्मणानुज्ञया पंचदशप्राजापत्यान् प्रत्याम्नायद्वाराकृत्वा तेनोदकुंभोदकेनशतकृत्वस्तां स्नापयित्वा पूर्ववस्त्रं परित्यज्य वस्त्रांतरेण वेष्टयित्वा दाहःकार्यः । सूतिकामरणेप्येष एव-विधिः । संकल्पादौ रजस्वलास्थाने सूतिकापदप्रवेशः । सूतिकाया रजस्वलायाश्चविदेशमरणे तत्रप्रायश्चित्तस्नानादिकं विनैवदाहे कृते तदस्थ्नां प्रायश्चित्तपूर्वकं पंचगव्यस्नापना-दिभिः शुद्धिसंपाद्य कृष्णाजिनेनिधानादियथोक्तोदाहःका-र्यः । एषविधिः सद्योमंत्रवद्दाहपक्षे । रजस्वलायाः प्रेता-याः संस्कारनिषेधस्मरणात् त्रिरात्रोर्ध्वं स्नातांतां विधिवद्द-हेत् इतिवृद्धशातातपः । अथवा रजस्वलां सूतिकांचमलं प्रक्षाल्यस्नापयित्वा काष्ठवदमंत्रकं दग्ध्वाऽस्थीनि विधिवद्द-

हेत । अत्रपक्षद्वयेपि प्रायश्चित्तमस्त्येव । सूतिकावस्थाय मरणे दिनभेदेन प्रायश्चित्तं उक्तं । तच्च प्रथमेत्र्यद्वं, द्वितीये अद्वद्वयं, तृतीये अद्वं । तदूर्ध्वं मासपर्यंतं कृच्छ्रत्रयं । प्रयोगरत्नेतु दशाहोर्ध्वं यावन्मासं कृच्छ्रत्रयमिति ॥

॥ गर्भिणीमरणविधिः ॥

षण्मासोत्तरं गर्भिण्यांमृतायां भर्तादिर्जलैर्गोमूत्रेण आपोहिष्ठादिभिर्मंत्रैः अतिमंत्रैः शवंप्रोक्ष्य स्मशानेनींत्वा नाभेरधः सव्यमुदरं चतुरंगुलंछित्वा पुत्रमादायसजीवंश्चेत् 'यस्तेस्तन' इतिऋचास्तनंदत्वाशिशुंग्रामप्रापयेत्॥ ततः सूत्रग्रथनेन उदरं अव्रणं कृत्वा पृषदाज्येनचापूर्य मृद्भस्मकुशगोमूत्रैः आपोहिष्ठादिभिस्त्रिभिःसंस्नाप्य वासोभिः प्रेतमाछाद्य शवधर्मेण दाहयेत् ॥ अप्राणस्य गर्भस्यखननं केचित्तु गर्भिण्याःस शल्यायाः (सगर्भायाः) मरणेकर्ता कुक्षिंभित्वा शल्यंजीवतिचेत् निजंगृहं प्रापय्य मृतंचेतिनिखाय्य । सशल्यमरण दोषनिवृत्यर्थं त्रयस्त्रिंशत्कृच्छ्रात्मकं प्रायश्चित्तं कुर्यात् ॥ कृछ्रद्वयं कार्यमिति प्रायश्चित्तहेमाद्रौ ॥ छेत्तुस्तुतमसकृच्छ्र प्रायश्चित्तमिति तत्रैव अत्रप्रयोगः ॥ कर्ता आचमनादिदेशकालसंकीर्तनांते अमुकगोत्रायाः अमुकनाम्न्याः गर्भिण्याः सशल्यमरणदोषनिवृत्यर्थं त्रयस्त्रिंशत्कृछ्रात्मकं प्रायश्चित्तं तत्प्रत्याम्नायद्वारावा सद्यःसूतकांतेवा अहमाचरिष्ये ॥ इति

संकल्प्यविधिनादहेत् ॥ सगर्भदहनेच तद्दोषपरिहारार्थं प्रायश्चित्तंकुर्यात् ॥ प्रायश्चित्तमिह गर्भवधप्रयुक्तं कार्यम् ॥ गर्भस्यस्त्रीपुंन्नपुंसकज्ञानासंभवेपि गर्भदहने प्रायश्चित्तमिदं कार्यमेव एवं आत्मशुध्यर्थं कृतेपिप्रायश्चिते गर्भिण्या अपिसगर्भदहनदोषनिवृत्यर्थं और्ध्वदेहिकाधिकारसिध्यर्थंच त्र्यद्बंप्रायश्चित्तं कार्यं ॥ इति गार्भिणीमरणविधिः ॥

॥ अथ सकेशामरणविधिः ॥

कर्ता आचम्य देशकालादिसंकीर्त्य अ० गोत्रायाः अ० नाम्न्याः प्रेतायाः भर्तृवियोगोत्तरं एतावंतंकालं निषिद्धकेशकंचुक्यादिधारणजनितप्रात्यवायपरिहारार्थं प्रत्यब्दं एकैककृच्छ्रं तथाकेशकंचुक्यादियुतायाः प्राणोत्क्रमणजनितदोषनिबर्हणार्थं कृच्छ्रत्रयप्रायश्चित्तं यथाशक्तिव्यावहारिक द्रव्यदानेन सूतकांते अहमाचरिष्ये ॥ इति संकल्प्य कंचुक्यादिपरित्यज्य वपनंकृत्वा संस्नाप्यविधिनादहेत् ॥

॥ अथ सकेशावपनविधिः ॥

तीर्थादौगत्वा स्नात्वा देशकालौसंकीर्त्य अ० गोत्रायाः अ० नाम्न्याः ममभर्तृवियोगोत्तरं एतावंतं कालंकेश कंचुक्यादिधारणदिवाद्विवारभोजनतांबूलभक्षणादिजनितप्रत्यवायपरिहारार्थं यतिचांद्रायणप्रातिनिधिभूतं प्रायश्चितंप्रत्यब्दमेकैककृच्छ्रं तत्प्रत्याम्नायगोनिष्क्रयीभूतताम्रकार्षापणमूल्य-

दानेन अहमाचरिष्ये ॥ तथा समस्तपापक्षयार्थं वापनादि करिष्ये इतिसंकल्प्य ॥ यानिकानिच० वपाम्यहं इति शिरसिदर्भंनिधाय वापयित्वास्नायात् ॥ ततः ॥ त्वंराजासर्वतीर्थानां० इति तीर्थंप्रार्थयित्वा ॥ पुनर्देशाद्युच्चार्य मम कायिकवाचिक मानसिकसांसर्गिकज्ञाताज्ञातभुक्ताभुक्तपीतापीतादिसकलदोषनिबर्हणार्थं अस्मिन्नमुकतीर्थे स्नानमहं करिष्ये ॥ तदादौ शरीरशुद्ध्यर्थं दशविधस्नानानि करिष्ये इतिसंकल्प्य भस्म गृहीत्वा ईशनायनमः शिरसि, तत्पुरुषायनमो मुखे, अघोरायनमो हृदये वामदेवायनमो नाभौ, सद्योजातायनमः पादयोः शिवायनमः सर्वांगे इति विलिप्यस्नात्वा आचमेत ॥ तत अग्रमग्रंचरंतीनां० इति गोमयेन ॥ त्वंदेव्यादिवराहेण रसायाःस्थानमिच्छता ॥ उद्धृतासिनमस्तुभ्यं पाप्मानम्प्रणाशय ॥ इति मृत्तिकया ॥ यत्वगस्थिगतंपापं देहेतिष्ठतिमामके ॥ स्नानंहि पंचगव्यस्य दहत्यग्निरिवेंधनं ॥ इति पंचगव्येन ॥ गवामंगेषु तिष्ठंति भुवनानिचतुर्दश॥ यस्मात्तस्माच्छिवंमस्यादिहलोकपरत्रच ॥ इति गोरजसा ॥ तिलस्नानं सदानॄणां परमंपावनंस्मृतं ॥ यतस्तत्प्रकरोम्यद्य सर्वपापापनुत्तये ॥ इति तिलकल्केन ॥ ओषध्यः सर्ववृक्षेषु तृणगुल्मलतादिकाः ॥ तासांस्नानेनमेशुद्धिः सर्वौषध्यःपुनंतुमां ॥ इत्यौषधीभिः ॥ हिरण्यगर्भगर्भ-

स्थं० प्रयच्छमे ॥ इति हिरण्योदकेन ॥ कुशमूलेस्थितोब्रह्मा कुशमध्ये जनार्दनः कुशाग्रे शंकरंविद्यात्तस्यस्नानेन शुध्यति ॥ इति कुशोदकेन ॥ गंगागंगेतियोब्रूयात० इति गंगोदकेन ॥ अत्र प्रतिद्रव्यं स्नानमाचमनंचकार्यं ॥ ततस्तीर्थं प्रार्थयित्वा एहिसूर्यसहस्रांशो० ॥ नमःकमलनाभाय० ॥ धातुःकमंडलूभ्दूते गंगेत्रिपथगामिनि ॥ त्रैलोक्यवंदिते देवि गृहाणार्घ्यं नमोस्तुते इति अर्घ्यत्रयंदत्वा स्नात्वा पंचगव्यंप्राश्यतदहरुपोषणं कृत्वा परेह्निपुनस्तीर्थेस्नात्वा श्राद्धं कुर्यात् ॥ तत्र पुरूरवार्द्रवौदेवौ ॥ भर्तृतत्पितृपितामह, स्वपितृपितामहप्रपितामहेति पार्वणद्वयोद्देशेन आमेनहेम्नावा ॥ शक्तौ गांदत्वा पिंडोद्वासनांते इष्टैःसहभुंजीत् ॥ तृतीयेहनि तीर्थेस्नात्वाप्रार्थ्य शुक्लवस्त्रं परिधाय षोडशोपचारैर्गंगांसंपूज्य सांगतासिध्यर्थं ब्राह्मणाय वंशपात्रेवायनं परिपूर्य—सवस्त्र फलतांबूलगोधूमैश्चप्रपूरितं ॥ वायनंद्विजवर्यसाहिरण्यं ददाम्यहं ॥ इतिदत्वा ब्राह्मणसमाराधनां कुर्यात् ॥

॥ पतितोदकदानप्रयोगः ॥

अथयः पतितो घटस्फोटेन बहिष्कृतो यश्चम्लेंच्छीकृतो यश्चप्रायश्चित्तानर्हपापी तस्य त्रिविधस्यमातृपितृभिन्नस्य पतितोदकविध्यनंतरं सपिंडीकरणवर्ज्यं अंत्यकर्म । पितुर्मातुश्च त्रिविधस्यापि नारायणबलिपूर्वकं सपिंडिकरणसहि·

तं सर्वं भवति इति प्रोक्तं ततःपतितोदकदानविधिर्यथा सवर्णादासीमाहूय तस्यैवेतनंदत्वा शुद्धपूर्णघटहस्तां तां ब्रूयात् "हेदासिगच्छ, मूल्येन तिलान् तोयपूर्णमिमंघटंच शीघ्रमानय ततो दाक्षिणाभिमुखी उपाविश्य वामपादेन तंसातिलं क्षिप । घटक्षेपणकाले चामुकसंज्ञक पतितप्रेतपिबपिबेति मुहुरुच्चारय " इति । सादासी तद्वाक्यं श्रुत्वा मूल्यं गृहीत्वा तथा कुर्यात् । एवं कृते पतिततृप्तिर्नान्यथा । एतच्च पतितस्य मृतदिने कार्यं । इति ॥

॥ ग्रंथसमाप्तिः ॥

---

देशेकर्णाटकाख्येविलसति धरणीमण्डनं मङ्गलानां
आगारंख्यातमम्रद्विजगणलसिता पूर्हि मुगोंडनाम्नी ।
प्राणैषीत्तस्थआर्यप्रतनमुनिगणोक्ताध्वनामुं निबन्धं ॥
मार्तंडः सोमयाजीविबुधजनमुदेऽन्त्येष्टिमार्तंडसञ्ज्ञं । ॥१॥

विद्वज्जनमनःकञ्जंरञ्जयन्सुचिरंभुवि ।
श्रीसर्वमङ्गलाजानेः कृपयाजीयता सौ ॥

इतिश्रीमार्तण्डसोमयाजिनः कृतिषु अंत्येष्टिपद्धतिः
॥ श्रीसच्चिदानंदार्पणमस्तु ॥

---

## श्रीशेषाचलमुद्रणालये विक्रेयपुस्तकानि.



१ शुक्लय० काण्वसंहिता (संपूर्णा) स्थूलाक्षरैर्दृढपत्रेष्वनकैर्विद्वाद्भिः परिशोध्य मुद्रिता मूल्यं ३ रू.

२ संस्कारमार्तंडः-श्रीमार्तंडसोमयाजिविरचितः सार्धशताधिकविषयपरिबृंहितः मध्यमाक्षरैश्चिक्कणतमपत्रेषु सुस्पष्टं मुद्रितः मूल्यं २ रू.

३ शांतिमार्तंडः—श्रीमार्तण्डसोमयाजिविरचितः भागद्वयात्मकः, अस्मिन् विस्तृतोपयुक्तविचारसमलंकृताः शतशो विषयाः संति. प्रयोगपद्धतिश्चातीव सुगमा. अत एव वैदिकैरवश्यं संग्राह्योऽयं । पृथग्भागस्य मूल्यम् १ रू.

४ उत्सर्जनोपाकरणम् मूल्यम् ०-८-०

५ नित्यविधिः मूल्यम् १ रु.

६ श्राद्धमार्तण्डः मूल्यम् १ रू.

प्राप्तिस्थानम् :—भि. प. काळे,
पो. आनंदवन, जि. धारवाड, ता. हावेरि

शुद्धाशुद्धपत्रिका ।

| अशुद्धं | शुद्धं | पत्रं | पंक्तिः |
| --- | --- | --- | --- |
| गणेश | गणेशं | १ | ७ |
| सस्कार | संस्कार | ,, | १६ |
| त्रोच्यार | त्रोच्चार | २ | ६ |
| तत्लुं | तत्तुं | २ | ९ |
| गृहि | ग्रही | ३ | २ |
| स्तथारा | स्तरा | ,, | ७ |
| दार्जितं | दर्जित | ४ | ४ |
| येज्ञ | यज्ञे | ८ | ११ |
| णाशरि | ण शिर | १० | १२ |
| संर्वांगा | सर्वांगा | १० | २२ |
| तैवा | तैव | ११ | ८ |
| सिद्धयर्त्थं | सिद्धयर्थं | १२ | १ |
| कानचि | कानिच | १२ | ४ |
| शम | शव | १४ | १७ |
| कार्म्भियांमृन्मव-ष्यात्या | कार्म्भिवांमृन्मयस्था-ल्यामा | १५ | १४ |
| नतो तृ | नतृ | १५ | १८ |
| चित | चिता | १९ | १२ |
| ता स्थाने | ता स्थाने | १९ | १६ |

| अशुद्धं | शुद्धं | पत्रं | पंक्तिः |
|---|---|---|---|
| मता | मया | २० | ६ |
| स्पार्शित | स्मार्शिन | २४ | ५ |
| सु ञ्चोद्यो | सुहृद्यो | २५ | ३ |
| णाग्निमु | णाभिमु | २६ | ३ |
| त्यंजलि | प्रत्यंजलि | ३२ | १२ |
| केत | केन | ३३ | १ |
| श्मशाना | श्मशानवा | ३६ | १८ |
| नि त्यो | निवृत्यो | ३७ | १६ |
| मर्ण्यः | र्मणः | ४२ | १० |
| थेंदास्थ | थेंऽस्थि | ४३ | ५ |
| नाभ | नाभि | ४४ | १२ |
| न्तंकु ॥ | न्कर्म | ४९ | ४ |
| देष | दोष | ,, | १० |
| तत्राशनं | तत्प्राशनं | ४९ | १२ |
| नृतनयजो | नूतनयज्ञो | ,, | ,, |
| तरूपा | तमरूपा | ५० | ४ |
| स्तोत्तंभ | स्योत्तंभ | ५१ | ६ |
| धर्मगजमा० | धर्मराजाय० धर्मराजमा | ५४ | १४ |
| वेताद | देवता | ,, | १९ |
| इतत्र | इतरत्र | ६० | १९ |

| अशुद्धं | शुद्ध | पत्रं | पंक्तिः |
|---|---|---|---|
| साद्ध्रंतु | स्तद्भ्रंतु | ६४ | १२ |
| प्रेन | ते | ६९ | १ |
| मलम्य | मालम्य | ८८ | ९ |
| दग्धेंभ्भो | दग्धेभ्यो | ९४ | १३ |
| ते ्स्व | तेन्न ्स्व | ९६ | २ |
| येसजाता | येसमाना | ९७ | ४ |
| ,, | ,, | ,, | ९ |
| ,, | ,, | ,, | १४ |
| वो संततिः | वः संततिः | ९९ | १८ |
| इमां प्रति | इमां सुवर्णप्रति | १०० | १९ |
| श्रा मा | श्राद्धमा | १०३ | ३ |
| विधनौ | विधिनौ | १०६ | ११ |
| ष्णु | विष्णु | १०९ | १० |
| इंद्रं | प्राजापतिं इंद्रं | १११ | १२ |
| शुध्यं | शुद्धं | ११३ | ३ |
| कर्माहंच | कर्माहिंच | ,, | ,, |
| हयाच | हमाच | ११४ | ७ |
| अग्निं वायुं | अग्निं वायुंसूर्यं | ११५ | २ |
| हो तमम्यस्यं | हे तमस्मभ्यं | ११६ | ८ |
| होमशेषं स्विष्ट | होमशेषं | ,, | ,, |